वस्तु । क्ली । द्रव्ये । त्रिका. ।
वस्तुकम् । क्ली । वास्तुकशाके । श.र. ।
वस्तूकी । स्त्री । श्वेतचिल्लीशाके । रा.नि.व.७ ।
वस्त्याशयः । पुं । मूत्राशये ।
वस्त्रम् । क्ली । तेजपत्रे । रा.नि.व.६ । वाससि । कापड़ । अम. ।
वस्त्रधारणम् । क्ली । वस्त्रपरिधाने । निर्म्मल-वस्त्रधारण-गुणाः—"काम्यं यशस्यमायुष्यमलक्ष्मीघ्न प्रहर्षणम् । श्रीमत्पारिषदं शस्तं निर्म्मलाम्बर-धारणम् ॥" राज.२प. ।
वस्त्रपञ्जरः (लः) । पुं । कोलकन्दे । रा.नि. व.७ ।
वस्त्रभूषणः । पुं । पटवासे । रक्ताञ्जने । वै. निघ. । माञ्जिष्ठवृक्षे । रा.नि.व.६ । स्त्री (णा) । मञ्जिष्ठायां । रा.नि.व.६ ।
वस्त्ररङ्गा । स्त्री । कैवर्त्तिकायां । रा.नि.व.३ ।
वस्त्ररञ्जकः (नः) । पुं । कुसुम्भवृक्षे । रा. नि.व.१० । 1281 (सं)
वस्त्ररञ्जिनी । स्त्री । मञ्जिष्ठायाम् । वै.निघ. ।
वस्त्ररागहृत् । पुं । नीलकाशीशे । नील शैशाकम् । वै.निघ. ।
वस्त्रोदरणम् । क्ली । मुखे वस्त्रबन्धनेन जलस्याग्र शीतलकरणार्थे घटस्याधोमुखरचणरूपोपाये । सु.सू.४५अ. ।
वस्नम् । क्ली । वसायाम् । चर्व्वि । रा.नि.व.१८ । चर्म्मणि । श.चौ.रा. । वसने । विश्व. ।
वस्न(स्त्र)सा । स्त्री । वसायाम् । रा.नि.व.१८ । शरीरान्तःशिरादौ । स्नायौ । त्रिका. । अम. ।
वहः । पुं । घोटके । मे. । वृषस्कन्धे । अम. ।
वहलगन्धम् । क्ली । सम्बरचन्दने । रा नि.व.१२ ।
वहलचक्षुः । पुं । मेषशृङ्गाम् । मेड़ाशिङे । प.मु. ।
वहलत्वचः । पुं । श्वेतलोध्रे । रा.नि.व.६ ।
वहलपल्लवः । पुं । शोभाञ्जनवृक्षे । सजिना गाछ । वा.सू.१५अ.वरुणादौ । "वहलपल्लवदर्भ-रुजाकराः ।"
वहलवर्त्म । क्ली । नेत्रवर्त्मगतरोगविशेषे । तल्लक्षणं यथा,—"वर्त्मोपचीयते यस्य पिड़काभिः समन्ततः । सवर्णाभिः स्थिराभिश्च विद्याद्वहल वर्त्म तत् ॥" मा.नि. ।
वहला । स्त्री । शताह्वायां । शुल्फा । रा.नि. व.४ । स्थूलैलायां । छोट एलाच । भा. सितोप-लादिलेहे ।
वहा । स्त्री । गन्धरास्नायां । प.मु. ।
वहिःकुटीचरः । पुं । कर्कटे । त्रिका. ।
वहिःपरिमार्ज्जनः । त्रि । वहिः स्पर्शमा-श्रित्य तैलाभ्यङ्गादिभिः यो देहं मार्जयति । च.सू. ११अ. ।
वहिरङ्गः । पुं । शरीरावयवे ।
वहिरिन्द्रियम् । क्ली । चक्षुःकर्णादिवाह्ये-न्द्रियेषु—चक्षुःकर्णनासाजिह्वात्वचु, वाक्पाणिपायु-पादोपस्थेषु च ।
वहिर्वेगज्वरः । पुं । ज्वरभेदे । लक्षणं— "सन्तापोऽभ्यधिको वाह्यस्तृष्णादीनाञ्च मार्दवम् । वहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ॥" च. चि.३अ. ।
वहिश्चरः । पुं । कर्कटे । हे.च. ।
वहुप्रजः । पुं । शूकरकन्दे । पिण्डसारु । प.मु. ।
वहुरसः । पुं । इक्षौ । आक् ।
वहुलवहुरसः । पुं । इक्षौ । वा.सू.१५अ. श्यामादिवर्गे । "वहुलवहुरसक्षीरवृक्षात्फलानि ।"
वहेडुकः । पु । विभीतकवृक्षे । रा.नि.व.११ ।
वह्निः । पु । चित्रकवृक्षे । रा.नि.व.६ । र.चि. ३अ. । "वह्निरेकः शम्भुरेकः ।" भल्लातकवृक्षे । निम्बुकवृक्षे । रा.नि.व.११ । शुक्लदर्भे । रा.नि.व.८ । अग्नौ ।
वह्निकरी । स्त्री । धातकीवृक्षे । धाइफुल । श.र. । [ १२ ।
वह्निकाष्ठम् । क्ली । दाहागुरुणि । रा.नि.व.
वह्निगन्धः । पुं । राले । धूना, रजन । श.र. ।
वह्निगर्भः । पुं । वंशे । श.र. ।
वह्निगर्भा । स्त्री । शमीवृक्षे । श.च. ।
वह्निचक्रा । स्त्री । कलिकारीवृक्षे । ईश-लाङ्गला ।
वह्निजिह्वा । स्त्री । लाङ्गलिकायाम् । विष-लाङ्गलिया । र.मा. । भा. ।

**वह्निज्वाला** । स्त्री । धातकीवृक्षे । रा.नि.व.६ । लाङ्गलिकायाम् । विषलाङ्गलिग्रा । वै.निघ. ।

**वह्निदग्धम्** । क्ली । अग्निदग्धरोगे । निदा. ।

**वह्निदमनी** । स्त्री । अग्निदमनीक्षुपे । শোনা । रा नि.व.४ ।

**वह्निदीपकः** । पुं । कुसुम्भवृक्षे । श.र. ।

**वह्निदीपिका** । पुं । अजमोदायाम् । वनयमानी । रा.नि.व.६ ।

**वह्निनामा (न्)** । पुं । चित्रकवृक्षे । र.मा. । भल्लातकवृक्षे । प.मु. ।

**वह्निनिर्मथना** । स्त्री । अग्निमन्थवृक्षे । आगगछ । वै.निघ. ।

**वह्निनी** । स्त्री । जटामांस्यां । र.मा. ।

**वह्निपुष्पा (ष्पी)** । स्त्री । धातकीवृक्षे । रा.नि.व.६ ।

**वह्निभूतिकम्** । क्ली । रौप्ये । वै.निघ. ।

**वह्निभोग्यम्** । क्ली । घृते । श.च. ।

**वह्निमथनः (ना)** । पुं, स्त्री । अग्निमन्थवृक्षे । গণিরি । वै.निघ. ।

**वह्निमन्थः** । पुं । गणिकारिकायां । গণিরি । प.मु. ।

**वह्निमारकम्** । क्ली । जले । श.च. ।

**वह्निमुखी** । स्त्री । लाङ्गलिकायाम् । विषलाङ्गलिग्रा । वै.निघ. ।

**वह्निरुचिः** । स्त्री । महाज्योतिष्मतीलतायाम् । বড় লতাকট্‌কী । वै.निघ. ।

**वह्निलोह(क)म्** । क्ली । कांस्ये । কাঁসা । रा नि.व.१३ ।

**वह्निवक्त्रा** । स्त्री । लाङ्गलिकायाम् । विषलाङ्गलिग्रा । भा. ।

**वह्निवर्णम्** । क्ली । रक्तोत्पले । श.च. ।

**वह्निवल्लभः** । पुं । सर्ज्जरसे, धूनके । ধূনো । त्रिका. ।

**वह्निवीजः** । पुं । निम्बुकवृक्षे । লেবুর গাছ । रा.नि.व.११ । क्ली । स्वर्णे । हे.च. । निम्बुफले । रा.नि.व.११ ।

**वह्निशिखम्** । क्ली । कुसुम्भपुष्पे । अम. । कुङ्कुमे । रा.नि व.१२ । स्त्री (खा) । कलिकारीवृक्षे । विषलाङ्गलिग्रा । धातक्याम् । रा.नि व.४ ६। फलिन्यां । প্রিয়ঙ্গু । धरणिः । जलपिप्पल्याम् । गजपिप्पल्याम् । वै.निघ. ।

**वह्निशिखरः** । पुं । लोचमस्तके । वनयमानी । कुङ्कुमे । कटजटायां । श.र. ।

**वह्निसंज्ञकः** । पुं । चित्रकवृक्षे । চিতা গাছ । अम. । [ वायौ ।

**वह्निसखः** । पुं । जीरकवृक्षे । रा.नि.व.६ ।

**वह्निसम्भूतम्** । क्ली । स्वर्णे । वै.निघ. ।

**वक्षः (स्)** । क्ली । वक्षःस्थले । तच्च हृदयोपरिकण्ठाधोभागे । वुक । रा.नि.व.१८ । क्रोड़ । কোল । अम. ।

**वक्षणम्** । क्ली । वक्षसि । श.च. ।

**वक्षोजम्** । क्ली । स्तने । रा नि.व.१८ ।

**वक्षोजोपमः** । पुं । चक्रवाके । চকা । वै.निघ. ।

**वक्षोरुहः** । पुं । स्तने । त्रिका. ।

**वांशी** । स्त्री । वंशलोचनायां । বংশলোচন । प.मु. । भा.उ.वाशी । "वांशी वरी वानरी ।" च.द.यक्ष्म.चि सर्पिर्गुड़े ।

**वाः (र्)** । क्ली । जले । अम. ।

**वाःकिटिः** । पुं । शिशुमारे । শুশুক । व्याक. ।

**वाकुचिका** । स्त्री । वाकुच्याम् । শাকুচ, সোমরাজ । वै.निघ.२भ.अभिन्दामञ्ज.चि. ।

**वाकुची** । स्त्री । (Psoratea corylifolia.) The plant serratula anthelmintika. सोमराजीक्षुपे । শাকুচ, সোমরাজ । हि वाव्‌ची, हुकची । मं वाउची । कं वाउचिगे । वम्. यांवची । ता. योगिविट्टुलु । गुणाः— कटुतिक्तोष्णा क्रमिकुष्ठकफघ्नी त्वग्दोषविषकण्डूतिखर्ज्जूघ्नी च । रा.नि.व.४ । वातकफकुष्ठत्वग्दोषघ्नी । राज. । मधुरा तिक्ता कटुपाका रसायनी विष्टम्भघ्नी हिमा रुच्या सरा श्लेष्मासपित्तनुच । तत्फलं पित्तलं कटु कुष्ठकफानिलघ्नं केश्यं त्वच्यं क्रमिश्वासकासशोथपाण्डुहृत । भा. । तत्शाकगुणाः—तिक्तं शीतलं कटुपाकरसं कफपित्तहरञ्च । च.सू.२७थ. ।

**वाकुचीभेदः** । पुं । सोमराजीविशेषे । तत्-

पर्य्यायगुणाः,—"शिवारि-र्वाकुचीभेदः कुष्ठ-दोष-चयासजित्। वातरक्तहरोलेपात् श्वित्र-श्वित्र-विनाशनः॥" भा.।

**वाकुलम्**। क्ली। बकुलफले। राज.।

**वाक्का**। स्त्री। मत्युदपचिविशेषे। च.सू.२७अ.।

**वाक्यदोषः**। पुं। न्यूनताधिक्यादौ। वाक्यदोषो नाम—"यथा खलु अस्मिन्नर्थे न्यूनमधिकमनर्थकमपार्थकमविरुद्धञ्चेति।" च.वि.८अ.।

**वाक्यप्रशंसा**। स्त्री। अन्यूनतादौ। वाक्यप्रशंसा नाम यथा—"यद्वाक्यम् अन्यूनमनधिकमनपार्थकमविरुद्धमधिगतपदार्थञ्च तद्वाक्यमननुयोज्यमिति प्रशस्यते।" च.वि.८अ.।

**वाक्यशेषः**। पुं। "येन पदेनानुक्तेन वाक्यं समाप्यते। सु.उ.६५अ.।

**वाक्शल्या**। स्त्री। कुटुम्बिनीक्षुपे। वै.निघ.।

**वागरः**। पुं। वृके। हे.च.।

**वागुजारलः** } **वागुज्जालः** } पु। नादेयमत्स्यभेदे। वम्. वागूसमत्स्य। सु.सू.४६अ.।

**वागुजी**। स्त्री। सोमराज्याम्। সোমরাজ। प.सु.। र.सा.सं.महामृत्युञ्जयरसे।

**वागुणः**। पुं। कर्म्मरङ्गवृक्षे। কামরাঙা গাছ। श.मा.। क्ली। कर्म्मरङ्गे।

**वागु(गुं)लिकः**। त्रि। राज्ञां ताम्बूलदातरि। हारा.।

**वागुशः**। पुं। वागुज्जालमत्स्ये। वै.निघ.।

**वाग्गुदः**। पुं। पक्षिविशेषे। त्रिका.। তরুকুণি পাখী।

**वाग्गुलिः**। पुं। ताम्बूल्याम्। हारा.।

**वाग्दलम्**। क्ली। ओष्ठाधरौ। त्रिका.।

**वाग्विलासी (इन्)**। पुं। कपोते। পায়রা। वै.निघ.।

**वाचः (चा)**। पुं, स्त्री। मत्स्यविशेषे। বাচা মাছ। गुणाः—"वाचः स्वादुर्गुरुः स्निग्धः श्लेष्मलो वातपित्तजित्।" राज.३प.।

**वाचनम् (कम्)**। क्ली। प्रहेणकाख्यपिष्टकभेदे।

**वाचस्पतिवल्लभः**। पुं। पुष्परागमणौ। পোখরাজ। भा.।

**वाजम्**। क्ली। घृते। अन्ने। जले। शुक्रे। मेघ.। पुं। पक्षतौ। मे.। [ श.मा.।

**वाजशलः**। पुं। पट्टशाके। পাটশাক।

**वाजिः**। पुं। अश्वे। वै.निघ.।

**वाजिकरी**। स्त्री। अश्वगन्धायाम्। वै.निघ.।

**वाजिकर्णः**। पुं। अश्वकर्णशाले। পীতশাল। भैष.सु.रो.चि.।

**वाजिखुरा**। स्त्री। कृष्णापराजितायां। কাল অপরাজিতা। वै.निघ.।

**वाजिगन्धा**। स्त्री। अश्वगन्धायां। रा.नि.व.४। सु.चि ३७अ.।

**वाजिदन्तः (कः)** } **वाजिदन्ता(न्ती)** } पुं, स्त्री। वासकवृक्षे। प.सु.। रा.नि.व.४। अम.। [ त्रिका.।

**वाजिनम्**। क्ली। आमिक्षायां। ছানার জল।

**वाजिनामा**। स्त्री। अश्वगन्धायाम्। वै.निघ.।

**वाजिनी**। स्त्री। अश्वगन्धायाम्। रा.नि.व.४। घोटक्याम्। भा.।

**वाजिपुत्री**। स्त्री। सल्लकीवृक्षे। वै.निघ.।

**वाजिपृष्ठः**। पुं। अम्लानवृक्षे। রক্ত ঝাঁটী। श.च.। [ कुष्माण्डे। वै.निघ.।

**वाजिप्रियः (या)**। पुं, स्त्री। यवे। भूमि-

**वाजिभक्षः (क्ष्यः)**। पुं। चणके। ছোলা। रा.नि.व.१६। मुद्गे। वै.निघ.।

**वाजिभोजनः**। पुं। मुद्गवृक्षे। মুগকলায়ের গাছ। रा.नि.व.१६।

**वाजिमन्थः**। पुं। चणकवृक्षे। मुद्गवृक्षे। वै.निघ.।

**वाजिमान् (त्)**। पुं। पटोले।

**वाजिविष्ठा**। स्त्री। अश्वविष्ठायाम्। तद्रसनस्यं हिक्काहरम् रक्तरोधकञ्च।

**वाजी (इन्)**। पुं। वासायाम्। বাসক। श.र.। पक्षिणि। अश्वे। अम.। त्रि। शुक्रयुक्ते। भैष.।

**वाजीकर(ण)म्**। क्ली। वीर्य्यवर्द्धनद्रव्ये। तल्लक्षणं—यद्द्रव्यं पुरुषं वाजिवत् सुरतक्षमं करोति तद्वाजीकरणमुच्यते। "यद्द्रव्यं पुरुषं कुर्य्याद्वाजिवत्सुरतक्षमं। तद्वाजीकरमाख्यातम्...।" भा.उ.

१अ. । "देवसानी यदौषिव्याद्वाजीवात्यर्थवेगवान् । नारीस्तर्पयते तेन वाजीकरणमुच्यते ॥" सु.चि. २६अ. । "तद्वाज्याकैनात्मवत्य' पुरुषेण धर्म्मार्थ-प्रीतियशोऽर्थीनत्वात् ।" तदुक्तं—"वाजीकरण मन्विच्छेत् पुरुषो नित्यमात्मवान् । तदायत्तौ हि धर्म्मार्थौ रतिश्च यश एवच । पुत्रस्यायतनं स्त्रीतद्-गायत्ते सुतान्वयाः । वाजीकरणमग्र्यञ्च चैव स्त्री या प्रहर्षिणी ॥" च.चि.२अ. । तद्वामकाष्टमतन्त्रे । तद्वाल्पदुष्टविशुष्कचीणरेतसामाप्यायनप्रसादोपचय-जननिमित्तं प्रहर्षजननार्थञ्च । सु.सू.१अ. । अपिच—"क्षीणानाञ्चाल्पवीर्य्याणां वृंहणं बलवर्द्धनं । तर्पणं समधातूनां वाजीकरणमुच्यते ॥" वैद्य. सं.२अ. ।

**वाजीकरी** । स्त्री । अश्वगन्धायाम् । मद.व.१ ।

**वाटिका** । स्त्री । वाट्यालके । বেড়েলা । श.र. । हिङ्गुपत्र्याम् । श.च. ।

**वाटी (इन्)** । पुं । इक्कटवृक्षे । ইৎকড় । प.मु. । पुं, स्त्री । वाट्यालके । বেড়েলা । रा.नि.व.४ । श.र. । जलचरपक्षिविशेषे । च.सू.२७अ. । हिङ्गुपत्र्याम् । श.च. । [ र.मा. ।

**वाटीदीर्घः** । पुं । इक्कटक्षुपे । ইৎকড় ।

**वाट्यम् (ट्या)** । क्ली, स्त्री । वाट्यालके । বেড়েলা । र.मा. । वै.निघ.२भ चन्दनादितैले ।

**वाट्यकम्** । क्ली । भृष्टयवे । श.च. ।

**वाट्यपुष्पम्** । क्ली । चन्दने । कुङ्कुमे । वै.निघ. ।

**वाट्यपुष्पिका (ष्पी)** । स्त्री । वाट्यालके । বেড়েলা । र.मा. । बलायाम् । च.सू.४अ. । पीतबलायां । পীত বেড়েলা । च.शा.८अ. ।

**वाट्यमण्डः** । पुं । निस्तुषदरदलितयवे । चतुर्गुणवारिसाधिते यवमण्डे । च.द.ग्रहणीचि. आयामकाञ्जिके । शूल.चि. । गुणाः—"वाट्यमण्डो विबन्धघ्नः शूलानाहविनाशनः । रोचनो दीपनो हृद्यः पित्तघ्नो मानिलापहः ॥" राज.३प. ।

**वाट्यायनी** । स्त्री । श्वेतवाट्यालके । শ্বেত বেড়েলা । च.सू.४अ. । [ श.र. ।

**वाट्यालः** । पुं । वाट्यालके । বেড়েলা ।

**वाट्यालकः** । पुं । पीतपुष्पबलायाम् । পীত বেড়েলা । भा. । बलायाम् । বেড়েলা । र.मा. । च.द.वा.व्या.चि. ।

**वाट्याल(लि)का** । स्त्री । लघुवाट्यालके । ছোট বেড়েলা । महाबलायाम् । বড় বেড়েলা । वै.निघ. ।

**वाट्याला (ली)** । स्त्री । लघुवाट्यालके । श.र. । महाबलायाम् । वै.निघ. ।

**वाट्याह्वम्** । क्ली । पुष्करमूले । वै.निघ. ।

**वाठः** । पुं । मदनफलवृक्षे ।

**वाड़वाग्निरसः** । पुं । स्थौल्याधिकारे रसः । पाठः—"शुद्धसूतं समङ्गन्धं ताम्र तालं समं समं । अर्कक्षीरेर्दिनं मर्द्यं क्षौद्रं लेह्यं द्विगुञ्जकम् ।" रस.र. ।

**वाणः** । पुं । भद्रमुञ्जे । अम. । शरवृक्षे । शर गাছ । रा.नि.व.८ । गोस्तने । मे. । पीतझिण्ट्यां । प.मु. । शरपुङ्खायाम् । বননীল । वं.प.कुष्ठ.चि । षड्बिन्दुतैले ।

**वाणपुङ्खा** । स्त्री । शरपुङ्खायाम् । বননীল । रा.नि.व.४ ।

**वाणा (णी)** । स्त्री । नीलझिण्ट्यां । प.मु. । शरपुङ्खाया । বননীল । च.द.व्रण.शो.चि. ।

**वाणाह्वम्** । क्ली । नीलकमले । উৎপলে । रा.नि.व.१० । स्त्री । (ह्वा) क्षुद्रशणपुष्पिकायाम् । ক্ষুদ্র ঝতনী । रा.नि.व.४ । कुब्जवृक्षे । वै.निघ. ।

**वातः** । पुं । पञ्चभूतान्तर्गतचतुर्थभूते । বাতাস । रा.नि.व.२१ । पूर्व्वादिदिग्भववायौ । प्राचीवातादि-प्रकृतिगुणाः—"शीतोऽतिमाधुर्य्यगुणः प्रयुक्तो वात-प्रकोपो बलकृद्विशेषात् । वाताधिकानां व्रणशोषि-णाञ्च प्राचीमरुत्तः पवनो न शस्तः ॥ किञ्चित् कटुतिक्तो मधुरान्वितः स्यात् कफः समीरोद्भवरोग-कारी । सुशीतलः श्लेष्मवतां व्रणानां शस्तो न चाग्नेयसमीरणश्च ॥ तिक्तः कषायो मधुरोऽतिमन्दः सुगन्धसंशीतगुणैः प्रहृष्टः । वदन्ति संज्ञां मलया-निलमिति प्रकृष्टरामाजनचित्तहारी ॥ मनोभवस्य प्रकरो मरुत्स्यात् वाणोद्भवः सम्भवति प्रचारः । न चातिशीतो न तथोष्णको वा शुभश्च याम्यप्रभवः समीरः ॥ रूक्षोग्रवातप्रशमः समीरः कटूष्णपित्ता-स्रजि दोषकारी । प्रतीच्यपश्ची देहबलस्य वायुः कफान्वितो नैरृतिकः समीरः ॥ अथोत्तरश्चो मरुतः प्रशस्तः करोत्यवाच्यास्तु दिशः प्रहृत्तः । वायुस्तयोदारति रक्तपित्त प्रशस्तो व्रणानां कफशोषिणां वा ॥" "वायव्यजातो मरुतः प्रशस्तः

कषायसंयुक्तगुणप्रपन्नः । करोति वातस्य वशं नराणां शस्तो न निन्द्यो व्रणशोधिनाञ्च ॥ स्वादुः कषायश्च कफप्रकोपी वायुः कुवेरस्य दिशः प्रवृत्तः । करोति मेघागमनं जलस्य शीतो न चोष्णो न च निन्द्य एषः ॥ शीतोऽतिशैत्यः कफवातकोपन् करोति चैशानदिशः प्रवृत्तः । शस्तश्च नासौ व्रणशोफकासश्वये तथा श्वासविकारिणाञ्च ॥" अथ वस्त्रादिवातगुणाः—"वस्त्रं नानाविधं चर्म्मैणजं तालवृन्तकम् । उशीरं शिखिपिच्छन्तु प्रत्येकेन गुणोत्तमाः ॥ वस्त्रप्रवृत्ता मरुतो न शस्ता व्रणशोषिणां । रक्तवाससमुत्पन्नं विशेषेण तु वर्जयेत् ॥ करोति कफरक्तस्य कोपनं बहुरोगकृत् । श्रमग्लानिपिपासासु तन्द्रानिद्राकरो भृशम् ॥ वैणवं व्यजनं तन्द्रानिद्राकरणमेव च । रुक्षवातिकषायश्च स च वातप्रकोपनः ॥ कांस्यपात्रसमुद्भवः सोष्णो वातस्य शान्तिकृत् । दाहश्रमन्नः स्वेदघ्नो निद्राचौष्ठ्यकरो नृणाम् ॥ तालपत्रस्य रम्भाया दलस्य व्यजनं हिमम् । मधुरातिश्रमघ्नं स्यादार्द्रत्वात् कफकोपनं । निद्राकरं प्रीतिकरं शोकरोगविकारहं । दाहपित्तश्रमग्लानिनाशनं श्रमशान्तिकृत् । उशीरमूलरचितं व्यजनं शिखिपिच्छकैः । व्यजनेन सुगन्धः स्यात् मन्दशीतगुणात्मकः । ग्लानिमूर्च्छाश्रमशोषविसर्पविषदर्पहा । इति पञ्चविधो वायुरुपायेन कृतो नृणाम् ॥" इति त्रयोदशवातगुणाः ।—"हेमन्ते पूर्व्वकृद्वायुराग्नेयः शिशिरे भवत् । वसन्ते दक्षिणो वायुर्ग्रीष्मे नैरृतकस्तथा ॥ वर्षासु पश्चिमो वायुर्वायव्यः शरदि स्मृतः । हेमन्ते शिशिरे चैव कथितयोत्तरोऽनिलः ॥ वर्षाऽङ्गः परतो वदन्ति निपुणास्तस्मिन्निशीथे शरत् । प्रोक्तः शैशिरिकस्ततो हिमऋतुः सूर्य्योदयादग्रतः ॥ मध्याह्ने च तथा वदन्ति निपुणा ग्रीष्मो ऋतुः स्यात्ततो वासन्तः कथितो ऋतुस्तु मुनिभिः पूर्व्वापराह्णे सदा ॥ कार्त्तिके मार्गशीर्षे वा माघे चाषाढ़संज्ञके । ऋतुसन्धौ च हेमन्ते सविषः स्यात्तु मारुतः ॥" चवि.५च. । वायुरोगे, वातव्याधौ । ते च शिरग्राहादयोऽशीतिः । प्रस्पन्दनोद्वहनपूरण विवेकधारणलक्षणशरीरस्थसञ्चालनकधातौ ॥ स "दोषधातुमलादीनां नेता शीघ्रः समीरणः । रजोगुणमयः सूक्ष्मो रुक्षः शीतो लघुश्चलः ॥" भा. । "देहे विचरतस्तस्य लक्षणानि निबोध मे । दोष धात्वग्निसमतां सम्प्राप्तिं विषयेषु च । क्रियाणामानु लोम्यञ्च करोत्यकुपितोऽनिलः । यथाग्निः पञ्चधा भिन्नो नामस्थानात्मकर्म्मभिः । भिन्नोऽनिलस्तथा ह्येको नामस्थानक्रियामयैः । प्राणोदानौ समानश्च व्यानश्चापान एव च । स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम् ॥" सु.नि.१अ. । च मतान्तरे दशविधः । यन्ते नागकूर्म्मकृकलदेवदत्तधनञ्जया इति अधिकाः पञ्च प्राणादयश्च पञ्च इति दश वायवः । नागादयः प्राणादीनां संज्ञान्तरमिति सुखबोधः । तेषु प्राणवायुः हृदयान्तरस्थ ऊर्द्ध्वगमनशीलः, रुक्षः, अन्नप्रवेशकश्च । अपानो गुदादिमध्यस्थः, अधोगमनशीलः, मलमूत्रोत्सारकः, लघुश्च । समानो नाभिमण्डलस्थः, रसधातुसञ्चालकः, अन्नस्य पाचकः, शीतलश्च । उदानः कण्ठस्थानः, ऊर्द्ध्वमुत्क्रमणशीलः, वाक्प्रवर्त्तकः, खरश्च । व्यानः सर्व्वशरीरव्यापी, निमेषादि प्रवर्त्तकः, सूक्ष्मश्च । नाग उद्गारप्रवर्त्तकः । कूर्म्मः नेत्रोन्मीलनकः । कृकलः क्षुधाजनकः । देवदत्तो जृम्भाप्रवर्त्तकः । धनञ्जयः सर्व्वशरीरव्यापी । भा. । शिष्टं वातप्रकोपादि प्रकोपशब्दे द्रष्टव्यम् ।

**वातकः ।** पुं । अश्मन्तकवृक्षे । विडङ्गाङ्ग । गोकर्णाम् । अपराजिता । अम. ।

**वातकण्टकः ।** पुं । वातव्याधिविशेषे । लक्षणं —"रुक् पादे विषमे न्यस्ते श्रमाद्वा जायते यदा । वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥" मा.नि. । "रक्तावसेचनं कुर्य्यादभीक्ष्णं वातकण्टके । पिबेदेरण्डतैलं वा दहेत् सूचीभिरेव च ॥" सु.नि.१अ. ।

**वातकफज्वरः ।** पुं । वायुश्लेष्मजन्यज्वरे । लक्षणं—"स्तैमित्यं पर्व्वणां भेदो निद्रागौरवमेव च । शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्त्तनं । सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥" मा.नि. ।

**वातकर्म्म (न्)** । क्ली । अपानवायुनिःसरणे । पर्द्दने । बराहपु. ।

**वातकासः ।** पुं । वायुजन्यकासरोगे ।

**वातकी ।** स्त्री । शेफालिकावृक्षे । रा.नि.व.४ । पु (न्) । वातरोगिणि । अम. ।

**वातकुण्डलिका ।** स्त्री । मूत्राघातरोगे । निदानादि—"रौक्ष्याद्वेगविघाताद्वा वायुर्बस्तौ सवेदनः । मूत्रमाविश्य चरति विगुणः कुण्डलीकृतः । मूत्रमल्पाल्पमथवा सरुजं सम्प्रवर्त्तते ।

वातकुण्डलिकां तां तु व्याधिं विद्यात् सुदारुणम् ॥" मा॰नि॰।

**वातकुम्भः**। पुं। करिगण्डाधोभागे। हे॰च॰।

**वातकेतुः**। पुं। धूल्यां। धूलौ। त्रिका॰।

**वातगजाङ्कुशः**। पुं। वातव्याधौ रसः। पाठः—"मृताभ्रतीक्ष्णताम्रञ्च मृततालकगन्धकम्। भार्गीं शुण्ठीं बलां धान्यं कट्फलं चाभयां विषम्। मर्दयेच्च पलाशद्रावैः निष्कैकां भक्षयेद्‌ वटीम्... ॥" रस.र.। अन्यत्र—"मृताभ्रतीक्ष्णकान्तञ्च ताम्रतालकगन्धकम्।" अन्यत्र यथा—"मृतं सूतं मृतं लौहं गन्धं तालकमाक्षिकं। पथ्या शृङ्गी विषं व्योषमग्निमन्थञ्च टङ्कणं। तुल्यं खल्ले दिनं मर्द्यं मुण्डीनिर्गुण्डिजद्रवैः। द्विगुञ्जां वटिकां खादेत् ॥" रस॰कौ॰।

**वातगण्डः**। पुं। वातजगलगण्डरोगे। निदा॰।

**वातगुल्मः**। पुं। वातुले। त्रिका॰। वायुजन्यगुल्मरोगे। निदा॰। See वायुगुल्मः।

**वातघ्नः**। त्रि। वातहरे मधुराम्ललवणद्रव्यमात्रे, उष्णस्निग्धत्वात्। सु.सू.४२अ.।

**वातघ्नी**। स्त्री। शालपर्ण्यां। अश्वगन्धायाम्। शिमुडीक्षुपे। रा॰नि॰व॰४।

**वातघ्नी**। स्त्री। वार्त्ताक्याम्। सु.भद्र-दार्व्वादिगणे।

**वातचटकः**। पुं। तित्तिरपक्षिणि।

**वातजः**। त्रि। वातिके। रा॰नि॰व.२०।

**वातनाडी**। स्त्री। दन्तमूलगतरोगे। लक्षणम्—"स्वानिलात् परुषसूक्ष्ममुखी स्यात् सा फेनानुविद्धमधिकं स्रवति क्षपासु।" मा॰नि॰।

**वातपर्य्ययः**। पुं। सर्व्वगताक्षिरोगविशेषे। लक्षण—"वारं वारञ्च पर्य्येति भ्रुवौ नेत्रे च मारुतः। रुजश्च विविधास्तीव्राः स ज्ञेयः... ॥" मा॰नि॰। [ शाङ्ग॰।

**वातपाण्डुः**। पुं। वायुजन्यपाण्डौ। शाङ्ग-

**वातपित्तघ्नः**। त्रि। वातपित्तनाशके गुरुपाकद्रव्यमात्रे। सु॰सू॰४१अ॰।

**वातपित्तजशूलम्**। क्ली। वातपित्तजनितशूलरोगे। तस्यौषधं मातुलुङ्गरसः गुडाज्ययुक्तः। वै॰जीवनम्।

**वातपित्तज्वरः**। पुं। वातपित्तप्रधाने ज्वरे। लक्षणं—"तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा। कण्ठास्यशोषो वमथुः रोमहर्षोऽरुचिस्तमः। पर्व्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ॥" मा॰नि॰।

**वातपोतः (थः)**। पुं। पलाशवृक्षे। रा॰नि॰व.१०। अम॰।

**वातप्रकृतिः**। त्रि। वायुप्रकृतौ। लक्षणं—"यः कृष्णवर्णश्चपलोऽतिरुक्षः केशाल्पगो बलवान् चमः स्यात्। सुप्तातिदन्तो नखशृङ्गिमेति दीर्घस्तनश्च क्षणमेव चमोऽसौ। दीर्घाक्षमो लोलुपहीनसत्त्वस्तथैव चाम्लरसभोजनेच्छुः। संमर्दनेनातिविमर्द्दनेन सौख्यं समागच्छति वातलो ना ॥" भक्ति॰पू॰ख॰।

**वातप्रमीः**। पुं। द्रुतगामिहरिणे। वाउट हरिण। अम॰। घोटके। नकुले। उणा॰।

**वातप्रशमनी**। स्त्री। आरुके। आलूबोखारा। वै॰निघ॰।

**वातफुल्लान्त्रम्**। क्ली। वातरोगे। उदराध्माने। फुस्फुसे। भूरिप्र.।

**वातमृगः**। पुं। द्रुतगामिहरिणे। जटा॰।

**वातरक्तम्**। क्ली। रोगविशेषे। तस्य निदानं—"लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः। क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः। कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः। दध्यारनालसौवीरशुक्ततक्रसुरासवैः। विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः। प्रायशः सुकुमाराणां मिथ्याहारविहारिणां। स्थूलानां सुखिनाञ्चापि कुप्यते वातशोणितम् ॥ हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च विदाह्यन्नं सविदाहोऽशनस्य ॥" सम्प्राप्तिः—"कृत्स्नं रक्तं विदहत्याशु तच्च दुष्टं स्रुतं पादयोश्चीयते तु। तत् सम्पृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम् ॥" भा.। [ श॰च॰।

**वातरक्तघ्नः**। पुं। कुक्कुरद्रुमे। कुकुरमुत्रा।

**वातरक्तान्तकरसः**। पुं। वातरक्ताधिकारे रसः। पाठः—"गन्धकं पारदं लौहं घनतालमनःशिलाः। शिलाजतु पुरं शुद्धं समभागं विचूर्णयेत्। विडङ्गत्रिफलाव्योषमग्निकेन पुनर्नवा। देवदारु चित्रकञ्च दार्व्वी श्वेतापराजिता। चूर्णमेषाम् पृथक् तुल्यं सर्व्वमेकत्र कारयेत्। त्रिफला भृङ्गराजस्य रसेनैव त्रिधा त्रिधा। भावना खलु

दातव्या ततः सचूर्णं भक्षयेत् । मधुना माषमात्रञ्च प्रातःकाले दिने दिने ॥" रस.र. । रस.कौ ।

**वातरक्तारिः** । पुं । गुड़ूच्याम् । श.च. ।

**वात(द)रङ्गः** । पुं । अश्वत्थवृक्षे । श.र. । त्रिका. ।

**वातरायणः** । पुं । सरलवृक्षे । श.र. । कर-पत्रे । काण्डे । उन्मत्ते । मे. ।

**वातरेताः (तस्)** । त्रि । वातभूयिष्ठशुक्रे, यस्य शुक्रं वातभूयिष्ठम् । रस.र.मू.चा.चि चित्रकाद्य-घृते ।

**वातरोगः** । पुं । वातव्याधौ । रा.नि.व.२० ।

**वातरोगी (इन्)** । त्रि । वातरोगग्रस्ते । अम. ।

**वातरोहिणी** । स्त्री । गलरोगभेदे । लक्षणं —"जिह्वां समन्तात् भृशवेदना ये मांसाङ्कुराः कण्ठ-निरोधिनः स्युः । तां रोहिणीं वातकृतां वदन्ति वातात्मकोपद्रवगाढयुक्ताम् ॥" सु.नि.१६प. ।

**वातलः** । पुं । चणके । छोला । श.च. । स्त्री (ला) । समङ्गायाम् । वराक्रान्ता । व.द. ।

**वातवलासकः** । पुं । तन्नामकज्वरे । वात-बलासक ज्वर । लक्षणं—"नित्यं मन्दज्वरो रूक्षः शूनकस्तेन सीदति । स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी ॥" मा.नि. । चक्षुस्तन्नामकरोगे । "कफमारुतसम्भूतः स्थूलः सन्धिसमाश्रितः । शोथो वातबलासाख्यो ज्वरदुर्घेव सवेदनः ॥ तेनातिदुःखसंतो-ऽश्वस्य सर्व्वं पर्व्व च जायते । क्षौद्रकं वेधयेत् सम्यक् वसातैलञ्च सर्पिषा ॥" व.द. ।

**वातवस्तिः** । पुं । मूत्राघात-रोगविशेषे । निदानादि—"वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः । निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः ॥ मूत्रसङ्गो भवेत्तेन वस्तिकुक्षिनिपीड़ितः । वातवस्ति. स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥" इत्यादि । मा.नि. ।

**वातविध्वंसनः (रसः)** । पुं । वातव्याधौ रसः । पाठः—"सूतमभ्रकसत्वञ्च कांस्यं गुडञ्च माक्षिकं । गन्धकं तालकं सर्व्वं भागोत्तरविवर्द्धितं । कज्जलीकृत्य तत्सर्व्वं यातारिसं विमर्दितं । तताश्च मर्द्दयित्वा तु गोलकीकृत्य यत्नतः । निम्बुद्रावैश्च सम्पीड्य तिलकल्केन लेपयेत् । भर्जाङ्गुलदलेनैव परिशोष्य प्रयत्नतः । प्रपचेद् वालुकायन्त्रे द्वादश-प्रहरन्ततः .. ॥" र. सा. सं. ।

**वातविपर्य्ययः** । पुं । सर्व्वगताक्षिरोगे । See वातपर्य्ययः ।

**वातविसर्पः** । पुं । वायुजन्यविसर्पे । लक्षणं —"तत्र वातात् स वीसर्पो वातज्वरसमव्यथः । शोफस्फुरणनिस्तोदभेदायासार्त्तिहर्षवान् ॥" मा.नि. ।

**वातवैरिः** । पुं । वातादवृक्षे । बादाम गाछ । भा. । रक्तैरण्डे । वै.निघ. ।

**वातव्याधिः** । पुं । वायुरोगे । बाई रोग । स चाशीतिविधः । च. । तस्य निदानं—"रूक्ष-शीताल्पलघ्वन्नव्यवायातिप्रजागरैः । विषमादुपचाराच्च दोषासृक्स्रवणादपि । लङ्घनप्लवनात्यध्वव्यायामा-तिविचेष्टितैः । धातूनां सङ्क्षयाच्चिन्ताशोकरोगाति-कर्षणात् । वेगसन्धारणादामादभिघातादभोजनात् । मर्म्मबाधाद्गजोष्ट्राश्वशीघ्रयानादिसेवनात् । देहे स्रोतांसि रिक्तानि पूरयित्वानिलो बली । करोति विविधान् व्याधीन् सर्व्वाङ्गैकाङ्गसंश्रयान् । अव्यक्तं लक्षणं तेषां पूर्व्वरूपमिति स्मृतम् ॥" इत्यादि । "अभ्यङ्गं स्वेदनं वस्तिर्नस्यं स्नेहो विरेचनम् । स्निग्धाम्ललवणस्वादु हृद्यं वातामयापहम् । स्वाद्वम्ललवणैः स्निग्धैराहारैर्वातरोगिणः । अभ्यङ्ग-स्वेदवस्त्याद्यैः सर्व्वानेवोपपादयेत् । पित्तसावरणे वातरोगे शीतोष्णभेषजम् । कफसावरणे वायौ रूक्षोष्णमत्यभेषजम् । केवले पवनव्याधौ स्निग्धोष्णं मत्यभेषजम् । स्निग्धोष्णरूक्षशीताद्यैर्वातजो यो न शाम्यति । विकारास्तत्र विज्ञेयाः दुष्टशोणित-सम्भवाः ॥" निदा. ।

**वातशीर्षम्** । क्ली । वस्तिस्थाने । स्त्रियो गर्भ-स्थाने । "गर्भस्थानञ्च तत् स्त्रियः ।" रा.नि.व.१८ ।

**वातशोणितम्** । क्ली । वातरक्तरोगे । भा. ।

**वातसङ्गः** । पुं । वायुरोधे । च.सिद्धि.२च. ।

**वातसारः** । पुं । बिल्ववृक्षे । वै.निघ. ।

**वातस्तम्भनिका** । स्त्री । चिञ्चायाम् । तेँतुल । वै.निघ. ।

**वात(ता)हतवर्त्म (न्)** । क्ली । नेत्रवर्त्मगत-रोगभेदे । लक्षणं यथा—"विमुक्तसन्धि निश्चेष्टं वर्त्म यत्र निमील्यते । एतद्वातहतं विद्यात् सरुजं यदि वारुजम् ॥" सु.उ.३च. ।

**वातहरः** । त्रि । वातनाशके ।

**वातहरवर्गः** । पुं । वातघ्नद्रव्यगणे । यथा,— "महानिम्बश्च कार्पासः विधरण्डो वचा द्विधा ।

**वातोदरम्।** क्ली। वातजनितोदररोगे। लक्षणं यथा—"संरुह्य पार्श्वोदरपृष्ठनाभीर्यस्तुदं ते कृष्णं शिरावनद्धं। सशूलमानाहवदुग्रशब्दं सतोदभेदं पवनात्मकं तदिति॥" सु.नि.७अ.।

**वातोना।** स्त्री। गोजिह्वायाम्। গোজিয়া লতা।

**वातोल्वण:।** त्रि। वाताधिके।

**वात्सीपुत्र:।** पुं। नापिते। त्रिका.।

**वाद:।** पुं। शास्त्रीयविचारे। "वादो नाम य: परस्परेण सह शास्त्रपूर्व्वकं विगृह्य कथयति। स वादो द्विविध: संग्रहेण, जल्पो वितण्डा च। तत्र पक्षाश्रितयोर्वचनं जल्प:। जल्पविपर्य्ययो वितण्डा।" च.वि.८अ.।

**वादमर्य्यादा।** स्त्री। वादस्य मर्य्यादायाम्। लक्षणं—"इदं वाच्यमिदमवाच्यं एवं सति पराजितो भवति इतीमानि खलु पदानि।" च.वि.८अ.।

**वादरम्।** क्ली। कार्पासजवस्त्रादौ। সূতার কাপড় আদি। स्त्री (रा)। कार्पास्याम्। কাপাস। श.र.।

**वादराङ्ग:।** पुं। अश्वत्थवृक्षे।

**वादलम्।** क्ली। मधुयष्टिकायाम्। যষ্টিমধু। श.च.।

**वादलीय:।** पुं। रम्भवंशे। रा.नि.व.७।

**वादामम्।** क्ली। स्वनामख्यातफले। বাদাম। गुणा:—उष्णं स्निग्धं वातहरं वल्यं शुक्रकरञ्च। राज.। [ हे.च.।

**वादाल:।** पुं। मत्स्यविशेषे। বোয়াল মাছ।

**वादिरम्।** क्ली। शृगालकोली। শেয়াকুল। श.र.। [ योनिरो.चि.।

**वादुलि:।** पुं। चर्मचव्याम्। বাদুড়। च.द.

**वाद्यपुष्पिका।** स्त्री। अतिवलायाम्।

**वाधन:।** त्रि। वाधाजनके। सद्य:प्राणहरे। च.चि.१अ.।

**वाधपुष्पी।** स्त्री। प्रियङ्गौ। व.द.।

**वाधा।** स्त्री। भङ्गवत्पीड़ायाम्। मा.नि.।

**वाधिर्य्यम्।** क्ली। वातव्याधिविशेषे। কালা। तत्कारणम्—"यदा शब्दवहं स्रोत: वायुराहत्य तिष्ठति। शुद्ध: श्लेष्मान्वितो वापि वाधिर्य्यं तेन जायते॥" सु.नि.१अ.।

**वाध्रीनस:।** पुं। गण्डके। গণ্ডার। हारा.।

**वान:।** त्रि। शुष्के। क्ली। शुष्कफले। শুকনা ফল। मे.। गोदुग्धजतरुचोरे। रा.नि.व.६।

**वानप्रस्थ:।** पुं। पलाशवृक्षे। प.मु.। मधुकवृक्षे। भा.। [ सु.सू.४६अ.।

**वानर:।** पुं। कपौ। अयं पर्णमृगजातीय:।

**वानरप्रिय: (या)।** पुं, स्त्री। क्षीरीवृक्षे। क्षीर्णी। र.मा.। वै.निघ.।

**वानराघात:।** पुं। लोध्रवृक्षे। লোধ গাছ। र.मा.।

**वानराक्ष:।** पुं। अणुभाश्वविशेषे। ज.द.३अ.। वन्यच्छागे। हारा.।

**वानरी।** स्त्री। शुकशिम्ब्याम्। আলাকুশী। श.र.। च.द.यक्ष्मा.चि.सर्पिर्गुड़े।

**वानरीबीजम्।** क्ली। शुकशिम्बीबीजे। আলাকুশীর বীজ। यो.रत्ना.उ.रतिवृद्धिकरपाके। "रम्भा वानरीबीजत:।" शा.यो.शतावरीमोदके।

**वानल:।** पुं। कृष्णतुलसीवर्बरके। কাল বাবুই তুলসী। श.च.।

**वानस्पत्य:।** पुं। फलपुष्पवति वृक्षे। पुष्पजफलवृक्षे आम्रादौ। अम.।

**वाना।** स्त्री। वर्त्तिकपक्षिणि। বটের। ज.टा.।

**वानो(ने)यम्।** क्ली। कैवर्त्तमुस्तके। কেওটমুতা। अम.।

**वानीर:।** पुं। जलवेतसे। तत्पर्य्याया:,—वृत्तपुष्प: शाखाल: जलवेतस: जलसम्भव: व्याधिघात: परिव्याध: नादेय:। गुणा:,—तिक्त: शीतल: कषाय: संग्राही व्रणशोधन: रक्षोघ्न: रक्तपित्तकफदोषघ्नश्च। रा.नि.व.९। च.चि.३अ.। वेतसवृक्षे। र.मा.। मद.। प्लक्षवृक्षे। वै.निघ.।

**वानीरक:।** पुं। मुञ्जतृणे। মুঁজ। रा.नि.व.८।

**वानीरज:।** पुं। मुञ्जायां। মুঁজ। रा.नि.व.७। स्त्री। क्ली। कुष्ठौषधे। কুড়। रा.नि.व.१२।

**वानेयम्।** क्ली। कैवर्त्तमुस्तके।

**वान्ताद:।** पुं। कुक्कुरे। त्रिका.।

**वान्तारि:।** पुं, स्त्री। भार्य्याम्। বামনহাটী।

पड़ पड़ाकटुरी। काकादनीलतायाम्। श्वेत कूँच। रा.नि.व.३।

**वायसारातिः**। पुं। पेचके। चम.।

**वायसाह्वा**। स्त्री। काकमाचायाम्। श्वेत ग्रुञ्ज कूँच। रा.नि.व.३। काकमाचीक्षुपे। कावमाचो। रा.नि.व.४।

**वायसीवल्ली**। स्त्री। करञ्जक्षुपाम्। मड़ा-करञ्ज। वै.निघ.।

**वायसोशाकम्**। क्ली। शाकविशेषे, काक-माचीशाके। वा.नि.१५.।

**वायसेक्षुः**। पुं। काशतृणे, काशभेदे। १८८८। र.मा.। प.मु.।

**वायसोलिका (ली)**। स्त्री। काकोल्याम्। कैकूला। रा.नि.व.३। चम.। मधूली। कान-कैकड़ो। र.मा.। महाज्योतिष्मतीलतायाम्। रा.नि.व.३। पत्रशाकभेदे। कागछिड़ा। प.मु.।

**वायुः**। पुं। वाते। रा.नि.व.२१। See वातः।

**वायुकेतुः**। पुं। धूलौ। हारा.।

**वायुगण्डः**। पुं। अजीर्णे। त्रिका.।

**वायुगुल्मः**। पुं। वायुदोषजन्यगुल्मरोगे। "यः स्थानसंस्थानरुजाविकल्पं विड्वातसङ्गं गलवक्त्र-शोषं। श्यावारुणत्वं शिशिरज्वरञ्च हृत्कुक्षिपार्श्वांस-शिरोरुजञ्च। करोति जीर्णे ऽभ्यधिकप्रकोपं भुक्ते मृदुत्वं समुपैति यश्च। वातात् स गुल्मो न च तत्र रुक्षं कषायतिक्तं कटु चोपशेते॥"- मा.नि.।

**वायुफलम्**। क्ली। करकायाम्। आकाशेर शील। मे.।

**वायुभक्ष्यः**। पुं। सर्पे। रा.नि.व.१०।

**वायुवाहः**। पुं। धूमे। वै.घ.।

**वायुवाहिनी**। स्त्री। वातवहायाम् धमन्याम्। सु.।

**वायुव्यवस्था**। स्त्री। ऋतुविशेषे वायोरव-स्थायाम्। यथा—वसन्ते दक्षिणः, वर्षायां पश्चिमः, शरत्सुत्तरः, हेमन्ते शिशिरे च पूर्व इति।

**वायुपः**। पुं। मत्स्यविशेषे। चालिहन मत्स्य। गुणाः—वायुषो मधुरो हृद्यो बृंहणो धातुवर्धनः। राज.१५।

**वारम्**। क्ली। जले। विधौ। मदिरापात्रे।

वै.घ.। पुं। कुक्कुटके। त्रिका.। [ हारा.।

**वारकम्**। क्ली। ह्रीवेरे। बाला। कल्पद्रुमे।

**वारकीरः**। पुं। वाजीरायां। ८८८८। मे.।

**वारङ्कः**। पुं। पक्षिणि। त्रिका.।

**वारङ्गः**। पुं। खड्गादिमुष्टौ। बाँट। सु.सू. २७। शङ्कुवदाहरणफले। खड्गेर छोट गोल बाँट। सु.सू.७५.।

**वारटा**। स्त्री। हंस्याम्। वै.घ.।

**वारणः**। पुं। हस्तिनि। चम.। हस्तिपिप्पल्याम्। पारिभद्रवृक्षे। पालते मान्दार। ये सकुटकवृक्षे। वै.निघ.।

**वारणकणा** | **वारणपिप्पली** } स्त्री। गजपिप्पल्याम्। वै.निघ.२भ.धातु.ज्व.दार्व्यादिः। वैद्यकोक्ताग्नि त्रिकटुकादिषु। पदकुलकमारमी लेप।

**वारणवल्लभा**। स्त्री। कदलीवृक्षे। त्रिका.।

**वारणवुषा (सा)**। स्त्री। कदलीवृक्षे। चम.।

**वारणा**। स्त्री। कदलीवृक्षे। भा.।

**वारला**। स्त्री। वरटायाम्। बोलता। वै.घ.। कदलीवृक्षे। भा.। हंस्याम्। वै.घ.।

**वारलीकः**। पुं। बल्वजाख्ये। बाबूई। श.र.।

**वारवु(बु)षा**। स्त्री। कदलीवृक्षे। श.र.।

**वारयः**। पुं। मत्स्यविशेषे। वै.निघ.।

**वारा**। स्त्री। काकमाच्याम्। गुड़कामाइनी। रा.नि.व.४।

**वारासनम्** | **वारसदनम्** } क्ली। भाण्डभेदे। झारी। त्रिका.।

**वाराहः**। पुं। हस्तिकन्दक्षुपे। चाल गड़ना गाछ। गुणाः—वनजो मदनः कटुः तिक्तः रसायनः कफवातमेहजन्तुनाशनः। रा.नि.व.८। शूकरे। वै.निघ.। [ ८८.।

**वाराहकः**। पुं। मावदरकीटभेदे। सु.कल्प.

**वाराहकर्णी**। स्त्री। अश्वगन्धायाम्। अश्वगन्धा। रा.नि.व.४।

**वाराहदशननामाश्रयः**। पुं। शूकरदंष्ट्रकनाम-व्याधौ। मा.स.१म.।

**वाराहपत्री**। स्त्री। अश्वगन्धायां। रा.नि.व.४।

**वाराहपुटम्।** क्ली। पुटविशेषे। "अरत्निमात्रके कुण्डे पुटं वाराहमुच्यते।" भा.। प्रयोगा.।

**वाराहपुटभावना।** स्त्री। अष्टपलकृतभावनायाम्। वै.निघ.।

**वाराहाङ्गी।** स्त्री। दन्तीवृक्षे। भा.।

**वाराही (कन्दः)।** स्त्री.पुं। (Dioscorea.) An esculent root, or a yam. स्वनामख्यातलताकन्दशाकविशेषे। चूवड़ि आलू। हिं गेंठी। मं वाराहीकन्द। तें आडदंडिचेट्टु, पाचितीगे, नेलताड़िचेट्टु। वम्. डुकरकन्द। तत्पर्य्यायाः,—विष्वक्सेनकान्ता गृष्टिः गृष्टिका घृष्टिः वदरा कच्छा वनमालिनी विल्वमूला शूकरी वराही कौमारी त्रिनेत्रा ब्रह्मपुत्री क्रोड़ः क्रोड़कन्या क्रोड़ी कन्या माधवेष्टा वनवासी कुष्ठनाशनः वल्यः अमृतः महावीर्य्यः शम्बरकन्दः शूकरकन्दः वराहकन्दः ब्राह्मीकन्दः वीरः महौषधं भूकन्दकः वृद्धिकः व्याधिहन्ता। अस्या उत्पत्तिः समस्तस्थूलपर्व्वते। "अनूपसम्भवे देशे वाराह इव लोमवान्।" भा.। गुणाः—तिक्ता कटुका विषपित्तकफघ्नी कुष्ठमेहकृमिघ्नी वृष्या बल्या रसायनी च। रा.नि.व.७। "वराहकन्दश्चाशोंघ्नो वातगुल्मनिवारणः।" अत्रि.१६अ.। "वाराहीकन्दः श्लेष्मघ्नः पित्तकृद्बलवर्द्धनः।" राज.३प.। महौषधिविशेषे। See ओषधिः। शुक्लभूमिकुष्माण्डे। वै.निघ.। वृद्धदारके। वा.उ.३९अ.। प्रियङ्गौ। मे.। वराहक्रान्तायाम्। वराक्रान्ता। भा.। सु.चि.३०अ.। श्यामाकपक्षिणि। श्यामा पाखी। रा.नि.व.१९। पवर्गीयापि मेदिन्याम्।

**वारि।** क्ली। जले। रा.नि.व.१४। ह्रीवेरे। वाला, गन्ध वाला। रा.नि.व.१०। भा.उ.पानी. रतिवल्लभपूगपाके। "विश्वावीरणवारिवारिद—।" भा.म.१भ.ज्वरचि.लाक्षादितैले। "त्वक्पत्रकं वारि सुरा समुस्ता।" [ त्रिका.।

**वारिकण्टकः।** पुं। शृङ्गाटके। शिङ्गाड़ा।

**वारिकफः।** पुं। समुद्रफेने। वै.निघ.।

**वारिकर्णिका।** स्त्री। कुम्भिकायाम्। खुड़्नी, पाना। श.र.।

**वारिकर्पूरः।** पुं। इल्लीशमत्स्ये। त्रिका.।

**वारिकुब्जः (कः)।** पुं। शृङ्गाटके। शिङ्गाड़ा। श.र.। त्रिका.। [ त्रिका.।

**वारिकृमिः।** पुं। जलौकायाम्। जोंक।

**वारिचत्वरः।** पुं। कुम्भिकायाम्। पाना। त्रिका.।

**वारिचरः।** पुं। मत्स्ये। शङ्खे। शङ्खनाभौ। रस.र.नेत्र.चि.त्रिकटुादिवर्त्तौ।

**वारिचरवर्गः।** पुं। जलचर-पक्षिसमूहे। तद्यथा,—"हंसः क्रौञ्ची बलाका च बकः कारण्डवः प्लवः। शरारी पुष्कराह्वश्च केशरी मणितुण्डिकः॥ मृणालकण्ठी मद्गुश्च कादम्बः काकतुण्डकः। उत्क्रोशः पुण्डरीकाक्षो मेघरावोऽम्बुकुक्कुटी॥ आरा नन्दीमुखी वाची सुमुखाः सहचारिणः। रोहिणी कामकाली च सारसो रक्तशीर्षकः। चक्रवाकास्तथान्ये च खगाः सन्त्यम्बुचारिणः॥"

**वारिचामरम्।** क्ली। शैवाले। शेयाला। त्रिका.।

**वारिजम्।** क्ली। द्रोणीलवणे। रा.नि.व.६। पद्मे। गौरसुवर्णे। पाकासोणा। लवङ्गे। रा.नि.व.१०।१३।१२। पुं। शङ्खे। शाँक। हे.च.। शम्बूके। शामुक। श.मा.। छिन्नलहवे। ज.द.।

**वारितरम्।** क्ली। उशीरे। रा.नि.व.१२।

**वारित्रा।** स्त्री। जलत्राणायाम्। टोका, टोके। त्रिका.।

**वारिदम्।** क्ली। ह्रीवेरे। बाला। श.र.। च.द.कास.चि.।

**वारिदः।** पुं। मुस्तायां। रा.नि.व.६। भा.म, वाजी.रतिवल्लभपूगपाके। "विश्वावीरणवारिवारिद...।" मेघे। मे.।

**वारिधरः।** पुं। भद्रमुस्तायाम्। मूता। वै.निघ.।

**वारिपर्णी।** स्त्री। शैवाले। कुम्भिकायाम्। पाना। तें तुटिकूर। वम्. जलकुम्भी। तत्पर्य्यायाः,—वारिकर्णी वारिकर्णिका वारिमुखी वारिपालिका वारिमूली। गुणाः—"हिमा तिक्ता लघ्वी स्वाद्वी सरा पटुः। दोषत्रयकरी रूक्षा शोणितज्वरशोषकृत्॥" राज.।

**वारिपालिका।** स्त्री। आकाशमूलिकायाम्। पाना। श.मा.।

**वारिप्रवाहः।** पुं। वारिनिर्झरे। श.मा.।

**वारिप्रश्नी**। स्त्री। वारिपर्ण्यां। পানা। श.मा.।

**वारिप्रसादनम्**। क्ली। कतक-फले। निर्म्मली फल। वै.निघ.।

**वारिबदर: (रा)**। स्त्री। प्राचीनामलके। পানি আমলা। त्रिका.। [ हारा.।

**वारिबालकम्**। क्ली। ह्रीवेरे। বালা।

**वारिब्राह्मी**। स्त्री। जलब्राह्मीक्षुपे। वै.निघ.।

**वारिभक्तवटिका**। स्त्री। अजीर्णाधिकारे वटी। "रसगन्धकमभ्रञ्च गुड़ूचीसत्त्वमेव च। विड़ङ्गं मरिचञ्चैव सर्व्वमेकत्र कारयेत्। आर्द्रकस्य रसेनापि गुड़िका कारयेद्बुध:। भक्षयेन्माषमात्रन्तु अम्लतोयानुपानत:...... ॥" কজ্জলি, অভ্রভস্ম, গুলঞ্চের পালো, বিড়ঙ্গ, মরিচ প্রত্যেক সম-ভাগ। আদার রসে মাড়িবে। মাত্রা ১ মাষা। रस.र.। [ रा.नि.व.१३।

**वारिभवम्**। क्ली। स्रोतोऽञ्जने। সুর্মা।

**वारिमानम्**। क्ली। पाचनादौ जलदानपरि-माणे। तत्र प्रबलाग्निमलपुरुषापेक्षया क्वाथ्यद्रव्यस्य पलं ग्राह्यम्। तत्साधनार्थं प्रस्थार्द्धं जलं दत्त्वा पादावशिष्टं कार्य्यम्। प्रस्थार्द्धत्वात् जलमष्टगुणं शरावद्वयं पादशेषेण पलचतुष्टयं ग्राह्यम्। आर्द्रकठिनातिकठिनानां मिलितानां द्रव्याणां पाचनादिसाधनविधौ द्रवपरिमाणे अनुक्ते जल-परिमाणमष्टगुणं दत्त्वा पाच्यम्। तदुक्तं—"कर्षादौ तु पलं यावत् दद्यात् षोड़शिकं जलम्। ततस्तु कुड़वं यावत् तोयमष्टगुणं भवेत्। चतुर्गुणमतश्चोर्द्ध्वं यावत् प्रस्थादिकं भवेत्। क्वाथ्यद्रव्यपले कुर्य्यात् प्रस्थार्द्धं पादशेषितम्। मृदौ चतुर्गुणं देयं कठिने-ऽष्टगुणं भवेत्। कठिनात् कठिनं यत्र दद्यात् षोड़शिकं जलम्। मृद्वादिद्रव्यसंघाते मानानुक्तौ चिकित्सका:। मध्यस्थोभयभागित्वादिच्छन्त्यष्टगुणं जलमिति।" प.प्र.१ख.।

**वारिमूली**। स्त्री। कुम्भिकायाम्। পানা। वारिपर्ण्यां। श.र.।

**वारिरुहम्**। क्ली। कमले। रा.नि.व.१०।

**वारिवदरम्**। क्ली। करमर्द्दके। हिं करौदा। जटा.।

**वारिवल्लभा**। स्त्री। विदार्य्याम्। भूँई कुमड़ा। रा.नि.व.७।

**वारिवल्ली**। स्त्री। कारवल्ल्याम्। मद.।

**वारिवाह: (न:)**। पुं। मुस्तायाम्। মুতা। अम.। अग्निमा.चि.भक्तविपाकवट्याम्।

**वारिशिरीषिका**। स्त्री। जलशिरीषे। वै.निघ.। [ वै.निघ.।

**वारिशुक्ति:**। स्त्री। जलशुक्तौ। झिनुक।

**वारिसम्भवम्**। क्ली। लवङ्गे। रा.नि.व.१२।२३। लवणे। वै.निघ.। सौवीराञ्जने। रा.नि.व.१३। कृमिशङ्खे। श्रीखण्डचन्दने। उशीरे। रा.नि.व.२३। पुं। यावनालशरे। জনার গাছ। रा.नि.व.८। रामशरे। শর।

**वारिसात्म्यम्**। क्ली। दुग्धे। वै.निघ.।

**वारुज:**। पुं। गौरसुवर्णशाके। वै.निघ.।

**वारुणम्**। क्ली। जले। रा.नि.व.१४। हरिताले। वै.निघ.।

**वारुण:**। पुं। मुष्टीभेदे। वाङ्गवारण। वै.निघ. २भ.सर्व्वज्व.लाक्षादितैले। वरुणवृक्षे। वै.निघ.।

**वारुणात्मजा**। क्ली। मद्ये। वै.निघ.।

**वारुणी**। स्त्री। स्वनामख्यातवृक्षे। सा कोङ्कण-देशे करवीरुणीति प्रसिद्धा। हस्तिन्याम्। रा.नि.व.२३। पश्चिमदिशि। अम.। सुरायां, मद्ये। रा.नि.व.१४। तालादिरसै: शतमद्ये। তাড়ি। "यत्तालखर्ज्जूररसैराहृता सैव वारुणी।" प.प्र.२ख.। "श्रमज्वरातुरे शोषे शोफपाण्ड्वामये क्षये। मते, कृमेऽपस्मारे च पक्वाशये मर्मेषु च। भ्रान्ते वा विषपीते वा सर्पदष्टे जलोदरे। रक्तपित्ते तथा श्वासे वारुणी न हिता मता। शुद्धस्फटिकसंकाशा सुस्निग्धा चैव वारुणी।" अत्रि.८अ.। इन्द्रवारुणी-लतायाम्। রাখালশশা। नकुल.१६प.। रा.नि.व.३। पुनर्नवाशालिपिष्टकृतसुरायाम्। गुणा:,— "सुरावद् वारुणी लघ्वी पीनसाध्मान-शूलनुत्।", भा.। भूम्यामलक्याम्। गण्डदूर्व्वायाम्। वै.निघ.। गण्डदूर्व्वायाम्। रा.नि.व.८।

**वारुणीयन्त्रम्**। क्ली। मद्यसाधनार्थं यन्त्रभेदे। तद्यथा.—"अर्द्धतोयसमायुक्तं जलद्रोणीविवर्जितं। तोयसंवेष्टिताधारऋजुनाड़ीसमन्वितम्। यन्त्रं तत् वारुणी संज्ञं सुरासाधनकर्म्मणि। बीजद्रव्यं घटे दत्त्वा संछाद्यान्येन तन्मुखं। मृदा मुखं विलिप्य च नाड़ीं वंशादिनिर्म्मिताम्। यन्त्रादाधारगां कृत्वा

स्रावयेद् विधिना रसं । वारुणीयन्त्रमेतद्धि सुरासन्धाने सुखम् ॥"

**वारुणीरसम्** । क्ली । मद्ये ।

**वारुण्डः** । पुं । कर्णगूथे । কাণের খলি । नैत्रमले । পিচুটী । मे. ।

**वारुपक्रः** । पुं । मत्स्यविशेषे । स स्थूलः नहिपाकारः तालुस्थाने गौरवाभा धत्ते, स्थूलशल्की च । तन्मांसगुणाः—वीर्य्यकरं दीपनं हृद्यदञ्च । रा.नि.व.१७ ।

**वारेन्द्रपत्रम्** । क्ली । सुगन्धवर्गीयपत्रविशेषे । পচা পাতা । "पत्रं वारेन्द्रसम्भवम् ।" सा.कौ. ग्रहणी.चि.शतावरीमोदके ।

**वार्त्तः** । पुं । हंसे । व्याक. ।

**वार्जम्** । क्ली । कमले । रा.नि.व.१० ।

**वार्त्तम्** । क्ली । आरोग्ये । रा.नि.व.२० ।

**वार्त्तकः** । पुं । वार्त्ताकौ । বেগুন । मे. । वर्त्तकपक्षिणि । हिं वटेर । भा. ।

**वार्त्ता** । स्त्री । वार्त्ताकौ । বেগুন গাছ । विका. । पाषाणभेदे । পাথরকুচি । वृहत्याम् । ব্যাকুড় । प्रयोगा. ग्रहणी.चि. मध्यमनायीचूर्णे । वार्त्तकपक्षिणि । গুড়গুড়ে, বটের । भा. ।

**वार्त्ताकः** । पुं । तित्तिरपक्षिणि । भा. । वार्त्ताकौ । বেগুন গাছ । विका. ।

**वार्त्ताकिनी** । स्त्री । वृहत्याम् । हिं वरहँटा । भा.४भ.योनि.रोग.चि. । "नतवार्त्ताकिनीकुष्ठम् ।"

**वार्त्ताकी** । स्त्री । वृहत्यां । विकृति । रा.नि. व.४ । कण्टकार्य्याम् । (इन् पुं, स्त्री । (Solanum melongena. Syn. S. Esculentum.) स्वनामख्यातफलशाके । বেগুন গাছ । हिं भाण्टा, बांगण । ते. वङ्गएङ्गिरिवंगु । उत्. वाइगुण । वम्. वांगे । ता. कुठिरेकइ । तत्पर्य्यायाः,—हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी वार्त्ता वार्त्ताकः वर्त्ताकी वार्त्तिकः वातिकुणः वातिगमः शाकबिल्वः शाकबिल्वकः महावृहती वृन्ताकः वृन्ताकी अङ्गणः वङ्गणः वैरम् कण्टकिनी कण्टपत्रिका कण्टफला कण्टवृन्ताकी कण्टालुः निद्रालुः महोटिका महती चित्रफला मांसलफला मिश्रवर्णफला नीलफला नृपप्रियफला रक्तफला वृत्तफला शाकश्रेष्ठा नीलवृन्ता राजकुष्माण्डः । गुणाः—कटुका मधुरा रुच्या पित्तघ्नी बलपुष्टिकरी गुरुः दाते वर्ज्या च । रा.नि.व.७ । तत्फलं—"निद्राकरं प्रीतिकरं गुरु स्यात् सवातलं कासविकारकारि । श्रेष्ठं सुदीर्घं कफवर्द्धनञ्च सश्वासकासारुचिवर्द्धनञ्च ॥" अत्रि.१६अ. । कोमलपक्ववार्त्ताकीगुणाः—"सा बाला कफपित्तघ्नी पक्वा सक्षारपित्तला ।"मध्यमवार्त्ताकीगुणाः—"वृद्धाफला त्रिदोषघ्नी रक्तपित्तप्रसादनी । कण्डूकच्छूहरी चैव वार्त्ताकी गुणवत्तरा ॥" कण्टकवार्त्ताकीगुणाः—"कण्टकी कटुतिक्तोष्णा रक्तपित्तप्रकोपनी । कण्डूकच्छूहरी चैव वार्त्ताकी दोषला मता ॥" अपिच,—वृन्ताकं स्त्री तु वार्त्ताकु-भण्टाकी भाण्टिकापि च । वृन्ताकं स्वादु तिक्तोष्णं कटुपाके न पित्तलम् । ज्वरवातबलासघ्नं दीपनं शुक्रलं लघु ॥ तद्बालं कफपित्तघ्नं वृद्धं पित्तकरं गुरु ॥

**वार्त्ताकुः** । पुं, स्त्री । वार्त्ताक्याम् । বেগুন গাছ । प.मु. । च.द.ज्व.चि.शाकविधौ । "पटोलपत्रं वार्त्ताकुम् ।" गुणाः—"अग्निप्रदा मारुतनाशिनी च शुक्रप्रदा शोणितवर्द्धिनी च । हृल्लासकासारुचिनाशिनी च । वार्त्ताकुरेषा गुणसम्प्रयुक्ता ॥" दग्धवार्त्ताकुगुणाः—"अङ्गारपक्वा वार्त्ताकुः किञ्चित् पित्तकरी मता । कफमेदोऽनिलहरा सरा लघुतरा परम् ॥" राज.३प. ।

**वार्त्ति(र्त्ती)कः** । पुं । वर्त्तिकपक्षिणि । वातचटके । हिं बगेरा । भा. । वार्त्ताकौ । श.र. ।

**वार्त्ति(र्त्ती)का** । स्त्री । वार्त्ताकौ । वर्त्तिकपक्षिणि । বগেরী, বটের পাখী । हारा. ।

**वर्त्ती (इन्)** । त्रि । निरामये । रा.नि.व.२० ।

**वार्दरम्** । क्ली । काकपिच्छायां । गे. । गुञ्जायां । दक्षिणावर्त्तशङ्खे । मे. । आम्रवीजे । जले । विश्व. । भारतीपक्षिणि ।

**वार्दलम्** । क्ली । दुर्दिने । বাদল । मे. ।

**वार्द्धक(क्य)म्** । पुं । वृद्धावस्थायाम् । मे. ।

**वार्द्धिकरा** । स्त्री । गुडूच्यां । रा.नि.व.३ ।

**वार्द्धिफेनम्** । क्ली । समुद्रफेने ।

**वार्द्धिभवम्** । क्ली । दक्षिणावर्त्तशङ्खे । आम्रवीजे । जले । द्रोणीलवणे । रा.नि.व.६ ।

**वार्द्धिहृत्** । पुं । पिप्पल्याम् । वै.निघ. ।

**वार्द्धिसम्भवम्** । क्ली । द्रोणीलवणे । वै.निघ. । आम्रवीजे ।

वार्डेयम् । क्ली । द्रोणीलवणे । रा.नि.व.६ ।
वार्ध्रीणसः । पुं । गण्डके । গণ্ডার । नीलग्रीव-रक्तशीर्षपक्षिविशेषे । ग.पुराणं ।
वार्भटः । पुं । कुम्भीरे । त्रिका. । शिशुमारे । वै.निघ. ।
वार्य्युद्भवम् । क्ली । कमले । धनञ्जयः ।
वार्य्यौकः । पुं । जलौकायाम् । জোঁক । सु.कल्प.५अ. ।
वार्व्वाणी । स्त्री । नीलमक्षिकायाम् । श.र. ।
वार्षिकम् । क्ली । त्रायमाणायाम् । मे. । शालि । धूर्त्त । वै.निघ. ।
वार्षिकी (की) । स्त्री । (Jasminum sambac.) वर्षाभवमल्लिकाभेदे । বেল ফুল, মল্লিকা ফুল । ते कुलवल्लकान्तःपेटु । सा च दीर्घ-वृन्तलघुपुष्पविशेषादनेकनिर्द्दिष्टा । तत्पर्य्यायाः,—श्रीपदी षट्पदानन्दा वार्षिकी कुल्लवल्लना । गुणाः:—शीतला हृद्या सुगन्धा पित्तघ्नी कफवातविस्फोट-क्रिमिदोषघ्नी च । . रा.नि.व.१० । शीतला लघ्वी तिक्ता दोषत्रयापहा कर्णाक्षिमुखरोगघ्नी च । तत्तैलं तद्गुणं स्मृतम् । भा. । कासबीजे । हिं चम्बा, मुगरा, बेल । बम्. मोगरो । ता. मल्लु । त्रायमाणालतायाम् । গোঝনিয়া লতা, বনা লতা । रा.नि.व.५ ।
वार्षिला । स्त्री । करकायाम् । মেঘের শিল । श.च. ।
वार्हतम् । क्ली । हस्तीफले । अम. । वा.सू. १५अ. । वै.निघ.२भ.अपस्मा.चि.भैरवरसायने । चुद्रवार्त्ताकीफले । বিকৃতি ফল । अम. ।
वार्ह्विः । पुं । ऋषिविशेषे । च. ।
वाल(क)म् । क्ली । बालके । বালা । अ.ह. । वै.निघ.२भ.ज्व.चि. ।
वालधिप्रियः । पुं । चमरीमृगे । रा.नि.व.१८ ।
वालुकायन्त्रम् । क्ली । औषधपाकार्थं यन्त्र-विशेषे । तल्लक्षणं—"भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके । कूपिकाकण्ठपर्यन्तं वालुकाभिश्च पूरिते । भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते । वालुकायन्त्रमेतद्धि यन्त्रं तत्र बुधैः स्मृतम् ॥" भा. ।
वाल्कली । स्त्री । मदिरायाम् । গৌড়ীমদ্য ।
वावयः । पुं । तुलसीभेदे । বাবুই । श.र ।

वावरी । स्त्री । बर्बूरवृक्षे । বাবলা গাছ । भेद मृतसञ्जीवनीसुरायाम् ।
वावलः । पुं । बब्बूलवृक्षे । বাবলা গাছ ।
वाशा (शिका) । स्त्री । वासकवृक्षे । বাসক গাছ । श.र. ।
वाशिरः । पुं । अपामार्गवृक्षे ।
वाशुरा । स्त्री । रात्रौ । उणा. ।
वाष्पः । पुं । अश्रुणि । নেত্রজল । अम. ऊष्मणि । मे. ।
वाष्पकः । पुं । मारिषे । নটিয়া শাক । भा. ।
वाष्प(ष्पि)का । स्त्री । हिङ्गुपत्र्याम् । শ্রাঁকুনী । श.र. । वा.चि.४अ. । कृष्णजीरके । म.द.व.२ । चुद्रराजिकायाम् । रस.र. । सूतिका.चि. । बर्बूर-वृक्षे । वै.निघ.२भ.वा.व्या.चि. ।
वाष्पी (का) । स्त्री । हिङ्गुपत्र्याम् । শ্রাঁকুনী । श.र. । गुणाः:—"वाष्पीका कटुतिक्तोष्णा क्रिमि-शोषापहा मता ।" राज.३प. ।
वासः । पुं । वाग्यालके । र.मा. । वासकवृक्षे । श.र. । गृहे । अम. । वस्त्र । अ.टी. । क्ली(स्) । तेजपत्रे । रा.नि.व.६ । वस्त्रे । अम. ।
वासकः (का) । पुं । ( Justicia adhatoda adhatoda vasaca.) स्वनामप्रसिद्ध-पुष्पशाकवृक्षे । ছোট বাসক, বাসকফুলের গাছ । मधु हिं अड़सा । अड़ूसा । कं अड़ूसा, आड़सोगे । ते अड्सर । ता. आध-डोड़े । तत्पर्य्यायाः,—वैद्यमाता सिंहपर्णी सिंहमुखी सिंहास्यः सिंहिका सिंही वृषः वृषः अटरूषः अटरूषः वाजिदन्तकः कमलोत्पाटलः आमलकः वाशकः वाशा वाशिका वासका वासा वाशिका वासा वासिका वाजी वैद्यसिंही मातृ-सिंही वासकपकः भिषङ्माता रक्तादनी कण्ठीरवी सितकर्णी वाजिदन्ती नासा पञ्चमुखी सिंहपर्णी मृगेन्द्राणी । गुणाः:—तिक्तः कटुः शीतः कासघ्नः पित्तजित् कामलाज्वरश्वासक्षयरोगघ्नश्च । रा.नि. व.४ । "वाटरूषः शीतवीर्य्यो लघुर्हृद्यः कटुः स्मृतः । तिक्तः स्वर्य्यः कासहन्ता कामलारक्त-पित्तहा । विवर्णता-ज्वर-श्वास कफ-मेह-क्षयापहः । कुष्ठारुचि-तृषा-वान्ति-नाशकः परिकीर्त्तितः ॥" वैद्यकम् । "वासकस्य च पुष्पाणि वङ्गसेनस

चव हि। कटुपाकानि तिक्तानि कासश्वयहराणि च॥" राज.२ष.।

**वासगृहम्।** क्ली। मध्यभवने। अम.। वासभवने।

**वासतः।** पुं। गर्दभे। श.र.।

**वासतेयी।** स्त्री। रात्र्याम्। त्रिका.।

**वासनम्।** क्ली। धूपने। वस्त्रे। मे.।

**वासनाह्वयः।** पुं। नागवल्लीलतायाम्। वै.निघ.।

**वासनी।** स्त्री। वत्सादनीलतायाम्। रा.नि.व.३।

**वासन्तः।** पुं। कृष्णमुद्गे। प.मु.। रा.नि.व. १६। मुद्गे। मूंग। त्रिका.। कोकिले। रा.नि.व. १९। तिलक्षुपे। रा.नि.व.१०। विभीतकवृक्षे। रा.नि.व.११। जातीपुष्पवृक्षे। काके। उष्ट्रे। मलयसमीरे। त्रिका.। मदनवृक्षे। श.मा.। क्ली। सिन्दूरे। वै.निघ.।

**वासन्ती।** स्त्री। स्वनामख्यातपुष्पवृक्षे, नवमल्लिकायाम्। বাসন্তীফুলের গাছ। বেলফুলের গাছ। हिं वसन्तीनेवारि। मं विरवन्ति। कं विरवन्तिगे। तत्पर्य्यायाः,—प्रवसन्ती वसन्तजा माधवी महाजातिः शीतसहा मधुबहुला वसन्तदूती नैपाली सप्तला नवमालिका नवमल्लिका। गुणाः— शीता रुच्या सुरभिः श्रमघ्नी च। रा.नि.व.१२। शीतला लघ्वी तिक्ता त्रिदोषघ्नी च। भा.। माधवीलतायाम्। प.मु.। रा.नि.व.१०। यूथिकायाम्। जूई। प.मु.। जातीवृक्षे। कोङ्कणे गणिकारिकेति प्रसिद्धे वृक्षे। पाटलायाम्। পারুল গাছ। रा.नि.व.१०। कोकिलायाम्। दन्तीपुष्पे। रा.नि.व.२३।

**वासपुष्पा।** स्त्री। चन्द्रशूरे। भा.।

**वासयोगः।** पुं। चूर्णे। আবীর। अम.।

**वासरः।** पुं। दिवसे। अम.।

**वासवः।** पुं। कृष्णमुद्गे। ?.निघ.।

**वासा।** स्त्री। स्वनामख्याततिक्तस्वादुवृक्षे। বাসকফুলের গাছ, বধুবাসক। वासन्ती। रा.नि.व.४। वा.सू.१५अ. दूर्व्वादौ। "दूर्व्वानन्तानिम्बवासात्मगुप्ताः।"च.द.पि.ज्व.चि. दुरालभादिः। "भूनिम्बवासाकटुरोहिणीनाम्।"

**वासाकुष्माण्डखण्डः।** पुं। रक्तपित्तकासे औषधम्। पाठः—"पञ्चाशच्च पलं ग्राह्यं कुष्माण्डात् प्रस्थमात्रतः। ग्राह्यं पलशतं खण्डं वासाक्वाथाढ़के पचेत्। मुस्ता धात्री शुभा भार्गी त्रिसुगन्धैश्च कार्षिकैः। ऐलेयविश्वधन्याकमरिचैश्च पलांशिकैः। पिप्पलीकुडवश्चैव मधुमानीं प्रदापयेत्॥" কাথার্থ—বাসকছাল ৬৪প. জল ৬৪ শ. শে. ১৬ শ. কুষ্মাণ্ডকুড়ি ৫০ প. ঘৃত ১৬ প.। প্রক্ষেপ—মুতা, আমলা, বংশলোচন, বামুনহাটী, গুড়ত্বক্, তেজপত্র, এলাইচ প্রত্যেক ২ তো. এলবালুক, শুঁঠ, ধনে এবং মরিচ প্রত্যেক ৮ তো. পিপুলচূর্ণ ৩২ তো. শীতল হইলে মধু ১ শ.।

**वासावासिका।** स्त्री। वासकवृक्षे।

**वासासवा।** स्त्री। कृष्णमूर्व्वायाम्। वै.निघ.।

**वासिः।** पुं। कुठारभेदे। বাইস। उणा.।

**वासिका।** स्त्री। वासकवृक्षे। श.र.।

**वासिकारम्।** क्ली। शुष्कशूल्यमांसे।

**वासिनी।** क्ली। शुक्लझिण्ट्याम्। श.च.।

**वासिष्ठम्।** क्ली। रुधिरे। हे.च.।

**वासिष्ठलेहः।** पुं। कासाधिकारे औषधम्। अत्र दशमूलादिद्रव्यकान्तं प्र. १ प.। हरीतकी ११००शतं यवः १६ श. वारि १२८ प. शे. १६ श. पुरातनगुड़ः १२॥० श. तैलं ४ श. घृतं ४ श. आमलकीक्वाथः ४ श.। पाकसिद्धौ मधु २ श. पिप्पलीचूर्णं ४ प. त्रिजातकं प्र. १ श. कलसे पूरयित्वा मासं स्थापयेत्। दशमूलादि प्र. १ प.। হরীতকী ১১০০, যব ১৬ শ. জল ১২৮ শ. শে. ১৬ শ. পুরাতন গুড় ১২॥০ শ. তৈল ৪ শ. ঘৃত ৪ শ. আমলারস ৪ শ.। পাকসিদ্ধে মধু ২ শ. পিপুলচূর্ণ ৪ প. ত্রিজাতক প্রত্যেক ৩ প. কলসে ভরিয়া ধান্যরাশিতে ১ মাস রাখিবে। वा.चि.३अ.।

**वासिष्ठी।** स्त्री। वसिष्ठकृतवैद्यके।

**वासी।** क्ली। तक्षण्यां। রেন্দা, ঘিসকাপ। वै.निघ.। त्रिका.।

**वासुकी।** स्त्री। विल्ववृक्षे। वै.निघ.।

**वासुदेवप्रियङ्करी।** स्त्री। शतावर्य्यां। শতমূলী। रा.नि.व.४।

**वासुदेवी।** स्त्री। शतमूल्याम्। रा.नि.व.४।

**वास्तिका।** स्त्री। वनमेथिकायाम्। वै.निघ.।

**वास्तु।** क्ली। वास्तुकशाके। रा.नि.व.०।

শ্বেতপত্র-কৃষ্ণতুলসী। रा.नि.व.१०। See अर्ज्जकः।

**वैकुण्ठाश्रमी (इन्)।** पुं। वैद्यवल्लभनामग्रन्थकारे। [नि.।

**वैकृतः।** त्रि। विकृतिसम्पन्ने। दुःसाध्ये। मा.

**वैकृतज्वरः।** पुं। अप्राकृतकालजाते वातज्वरे। "प्रायेणानिलजो दुःखः कालेष्वन्येषु वैकृतः। हेतवो विविधास्तस्य निदाने सम्प्रदर्शिताः॥" च.चि.३अ.। वर्षादिषु वाताद्यैः क्रमाद् यो ज्वरः स प्राकृतः, वर्षासु वातिकः, शरदि पैत्तिकः, वसन्ते च श्लैष्मिकः, अतोऽन्यो वैकृतः तथा वर्षासु पैत्तिक इत्यादि। मा.नि.।

**वैक्रान्तम्।** क्ली। स्वनामख्यात-मणिविशेषे। পোখরাজ। तत्पर्य्यायाः,—विक्रान्तं नीचवज्रं कुवज्रकं गोनासः क्षुद्रकुलिशं जीर्णवज्रं गोनसः। तच्च श्वेतनीलरक्तभेदेन त्रिधा। तन्निरुक्तिः—"वज्राकारस्यैव प्रसह्य हरणाय सर्व्वरोगाणाम्। यद्विक्रान्तिं धत्ते तद्वैक्रान्तं बुधैरिदं कथितम्।" तेषां साधारणगुणाः—रसवीर्य्यविपाकेषु वज्रसमं क्षयकुष्ठविषघ्नं पुष्टिकरं रसायनञ्च। अपिच—"वैक्रान्तं वज्रसदृशं वज्रवद्रसवीर्य्यकम्। तथाप्यभावे वज्रस्य ग्राह्यं वैक्रान्तमुत्तमम्॥" रा.नि.व.१३। तच्छोधनमपि हीरकवत्। See हीरकम्। वैक्रान्तं वज्रवत् शोध्यं नीलं श्वेतञ्च लोहितम्। वज्रलक्षणसंयुक्तं दारुघातासहिष्णु तत्। हयमूत्रेण तत् सिञ्चेत् तप्तं तप्तं त्रिसप्तधा। पश्चाज्जीलरवारुण्या लिप्तं मूषागतं पुटैः। कुञ्जराख्यैर्मृतिं याति वैक्रान्तं सप्तभिस्तथा। भस्मीभूतन्तु वैक्रान्तं वज्रस्थाने नियोजयेत्॥" अवि.७अ.।

**वैगन्धिकः।** पुं। गन्धके। वा.उ.३६अ.।

**वैजननः।** पुं। प्रसवमासे। अम.।

**वैजपाणिः।** पुं। ऋषिविशेषे। च.।

**वैजयन्तिका।** स्त्री। जयन्तीवृक्षे। জয়ন্তীগাছ। अम.। अग्निमन्थवृक्षे। गणिरि। रा.नि.व.९।

**वैजयन्ती।** स्त्री। जयन्तीवृक्षे। र.मा.। सु.चि.११अ.। अग्निमन्थवृक्षे। गणिरि। इ.च.। सु.चि.१९अ.। वा.उ.३अ.।

**वैजिकम्।** क्ली। शिग्रुतैले। শজিনার তৈল। मे.। पुं। सद्योजाताङ्कुरे। मे.। आत्मनि। श.मा.।

**वैडालव्रतम्।** क्ली। विडालविष्ठायाम्। "वैडालं वा शकृद् योन्यं वेपमानस्य धूपने।" च.द.ज्व.चि.धूपे।

**वैणवम्।** क्ली। वेणुयवे। বংশধান্য। अम.। पुं। उपनयने वैणुदण्डे। अम.। स्त्री (वी)। वंशलोचनायाम्। रा.नि.व.६। [अम.।

**वैतंसिकः।** पुं। मांसविक्रेतरि। কসাই।

**वैतरणवस्तिः।** पुं। निरूहवस्तिभेदे। यथा—"पलशुक्तिककर्षकुडवैरम्लीकास्तगुडसिन्धुगोमूत्रैः। ईषत्तैलयुतो वस्तिः शूलानाहामवातहृत्। वैतरणः क्षारवस्तिः भुक्ते चापि प्रदीयते॥" च.द.निरूहवस्तौ। गोमूत्रं ८प. पक्वतैलं १प. मदनफलस्यैकं व्यवहारात्। एकपुटकास्येयं मात्रा।

**वैतसः।** पुं। अम्लवेतसे। जटा.।

**वैदर्भः।** पुं। दन्तमूलगतमुखरोगे। "घृष्टेषु दन्तमूलेषु संरम्भो जायते महान्। भवन्ति च चला दन्ताः स वैदर्भोऽभिघातजः॥" सु.नि.१६अ.।

**वैदलः।** पुं। दालिनिर्म्मितपिष्टकभेदे। ডাল-পুরি। भा.च.। गुणाः—गुरुः भक्ष्यः विष्टम्भी सृष्टमारुतश्च। राज.।

**वैदलवर्गः।** पुं। द्विदलान्नसमूहे। तद्यथा—मुद्ग-वनमुद्ग-कलाय-मकुष्टक-मसूर-माङ्गल्य-चणक-सतीनत्रिपुटहरेणुकाढ़कीप्रभृतयो वैदलाः। तत्साधारणगुणाः—"कषाया मधुरा शीताः कटुपाका मरुत्कराः। बद्धमूत्र-पुरीषाश्च पित्त-श्लेष्महरास्तथा॥ ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारिणः॥"

**वैदलान्नम्।** क्ली। वैदलयुक्तभक्ते। ডালিয়া। तद्गुणाः—"वैदलान्नं रुचिकरं गुरु द्रव्यगुणैः समम्।" वै निघ.।

**वैदलिकशिम्बः।** पुं। वैदलिकशिम्ब्याम्। गुणाः—"रुचिप्रदाश्चैव सुदुर्जराश्च सर्व्वे मता वैदलिकास्तु शिम्बाः।"

**वैदारिकः।** पुं। हीन-मध्य-प्रवृद्ध-वातादिजनितसन्निपातज्वरे। लक्षणं—"अल्पशूलं कटीतोदो मध्यदाहो रुजा भ्रमः। भृशं क्लमः शिरोवक्त्र-मन्या-हृदय-वाग्रुजः॥" प्रमीलकः श्वास-हिक्का-कास-जाड्यं विसंज्ञता। प्रथमोत्पन्नमेतत्तु साधयन्ति कदाचन॥ एतस्मिन् सन्निपाते तु कर्णमूले सुदारुणाः। पिड़का जायते जन्तोर्यया कृच्छ्रेण जीवति॥ भा.म.१भ.। [निघ.।

**वैदिका।** स्त्री। भूमिजम्बूवृक्षे। वनजाम। वै.

भिषरा ये न्, वैद्यत्वं तेष्ववस्थितम् ।” च.सू.११ अ.। वासाहत्ते। श.च.।

**वैद्यकम्।** क्ली। वैद्यस्य कर्म्मणि। अष्टाङ्ग-चिकित्साशास्त्रे, दशाङ्गवैद्यशास्त्रे च। यथा—शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमार-भृत्यागदतन्त्र रसायनतन्त्रं वाजीकरणतन्त्रञ्च। सु.। द्रव्याभिधानं गदविनिश्चय: कायसौख्यसम्पादन शस्त्र विद्यापश्चाघटीप्रभावेण भूतनिग्रह. विषप्रतीकार: बालोपचार: रसायनं शालाक्यं इत्यष्टेति। वै.निघ.।

**वैद्यचिन्तामणि:।** पुं। वल्लभेन्द्रकृतवैद्यक-ग्रन्थे। [ग्रन्थे। रुद्रटकृते च।

**वैद्यजीवनम्।** पुं। लोलिम्बराजकृतवैद्यक-

**वैद्यतीपसंग्रह:।** पुं। भीमसेनकृतचिकित्सा-संग्रहे। [टीकायाम्।

**वैद्यत्रिंशट्टीका।** स्त्री। चन्द्रटकृतत्रिंशच्छ्लोकी-

**वैद्यदर्पणम्।** क्ली। वैद्यकसंग्रहे।

**वैद्यनाथवटी।** स्त्री। ज्वरातिसारे औषधम्। पाठ:—"रसस्य भागं संगृह्य काञ्जिकेन तु शोध-येत्। चित्रकस्य रसं चापि त्रिफलायाश्च बुद्धिमान्। रसार्द्धं गन्धकं शुद्धं भृङ्गराजरसेन वै। ताभ्यां संमूर्च्छनं कृत्वा स्वरसै: शाणसम्मितै:। खल्लयेच्च शिलाखल्ले क्रमशो वक्ष्यमाणकै:। निर्गुण्डीमण्डूकी-श्वेताकुचैलाग्नीपसुन्दरै:। भद्राङ्गकेशराजैश्च जय-न्तीन्द्राशनोत्कटै:। सर्षपाभां वटीं कृत्वा दद्यात्तां ग्रहणीगदे......।” रस.र.।

**वैद्यबन्धु:।** पुं। आरग्वधवृक्षे। সোনাল গাছ। श.च.।

**वैद्यमनोरमा।** स्त्री। वैद्यकग्रन्थभेदे।

**वैद्यमाता।** स्त्री। वासायाम्। বাসক গাছ। अम.।

**वैद्यरसायनम्।** क्ली। रसायनग्रन्थविशेषे।

**वैद्यवल्लभ:।** पुं। छदयर्षिकृतवैद्यकग्रन्थे।

**वैद्यविनोद:।** पुं। शङ्करकृतवैद्यकग्रन्थे।

**वैद्यविलास:।** पुं। रघुनाथकृतवैद्यकशास्त्र।

**वैद्यवृन्द:।** पुं। नारायणकृतवैद्यशास्त्रे।

**वैद्यसार:।** पुं। दर्पकीर्त्तिरचितवैद्यके।

**वैद्यसिंही।** स्त्री। वासायाम्। বাসক গাছ। श.र.।

**वैद्यहितोपदेश:।** पुं। श्रीकण्ठकृते तथा शिवपण्डितकृते च चिकित्साशास्त्रे।

**वैद्या।** स्त्री। काकोल्याम्। কাঁকলা। श.च.।

**वैद्यामृतम्।** क्ली। नारायणदासकृते रामेश्वर-कृते च वैद्यशास्त्रे। [ग्रन्थे।

**वैद्यामृतलहरी।** स्त्री। मथुरानाथकृते वैद्यक-

**वैद्यावतंश:।** पुं। लोलिम्बराजकृतवैद्यके।

**वैधात्री।** स्त्री। ब्राह्मीक्षुपे। रा.नि.व.५।

**वैपरीत्यलज्जालु:।** पुं, स्त्री। लघुलज्जालु-कायाम्। "लज्जालुर्वैपरीत्यान्या स्वल्पक्षुपबृह-द्दला।” गुणा:—कटुरुष्ण: कफघ्न: रसनियामक: नानाविज्ञानकारकश्च। रा.नि.व.५।

**वैपादिकम्।** कुष्ठरोगभेदे। तल्लक्षणं—"वैपा-दिकं पाणिपादस्फुटनं तीव्रवेदनम्॥ मा.नि.।

**वैरस्यम्।** क्ली। मुखविरसतायाम्। "वैरस्य नयनप्लव:।” मा.नि.।

**वैराट:।** पुं। इन्द्रगोपकीटे। हे.च.।

**वैराटक:।** पुं। तन्नामककन्दविषभेदे। गुणा: —"वैराटकेनातिदु:खं शिरोरोगश्च जायते।” सु.कल्प.२अ.। See कन्दविषम्।

**वैरातङ्क:।** पुं। अर्ज्जुनवृक्षे। रा.नि.व.९।

**वैरोचनरस:।** पुं। अजीर्णादौ रस:। पाठ: —"मृतसूतं चतुर्भागं भागैकं मृतहेमकं। अष्ट-भागं शुद्धगन्धं दिनैकं चित्रकद्रवै:। मर्दितं शोषितं चूर्णं वराटीस्तेन पूरयेत्। टङ्कणेन मुखं दद्या भाण्डमध्ये निरोधयेत्। शुष्कं गजपुटे पश्चात् स्वाङ्गशीत विचूर्णयेत्। चतुर्गुञ्जा कणा चोद्रं लोह-मग्निप्रदीपनम्......॥” रस.र.।

**वैल्वम्।** क्ली। विल्वफले। अ.टी.। त्रि। विल्व-भवे। विल्वीयये। वा. चि.१अ.

**वैवर्ण्यम्।** क्ली। विवर्णतायाम्। मा.नि.।

**वैवस्वतद्रुम:।** पुं। कुष्ठवैरिवृक्षे। ঢাকমুগরা। अभि.।

**वैशाख:।** पुं। मन्थनदण्डे। वर्षस्य प्रथमे मासि। अम.। रक्त-पुनर्नवायाम्। वै.निघ.। अश्वस्य तन्नामकग्रहे। लक्षणं—"सर्व्वेन गुरुणा चैव दीप-मानेन पण्डित:। गात्रेण विद्याद्दाहन्तु वैशाख: परिकीर्त्तितम्॥” ज.द.५८अ.। स्त्री (खी)। रक्त-पुनर्नवायाम्। গাদাপুণ্যা। रा.नि.व.५।

वैश्चिकी । स्त्री । वमन-विरेचनयोः चतुर्विंश-श्रौषधगाणतमे । च-द-वमनाधिकारे । [नि-व-६ ।
वैशिजाता । स्त्री । पुत्रदाशीलतायाम् । रा.
वैश्या । स्त्री । हरिद्रायाम् । वै-निघ. ।
वैश्रवणालयः । पुं । वटवृक्षे । ई-च. ।
वैश्रवणावासः । पुं । वटवृक्षे । जटा. ।
वैश्रवणोदयः । पुं । वटवृक्षे । र-मा. ।
वैश्वानरः । पुं । चित्रकवृक्षे । अम. । पित्ते । अग्नौ । अम. ।
वैश्वानरचूर्णम् । क्ली । उदरशमहरं चूर्णम् । पाठः—"माणिमन्थस्य भागौ द्वौ यमान्यास्तद्वदेव तु । भागास्त्रयोऽजमोदाया नागरान्नागपञ्चकं । दश द्वौ च हरीतक्याः सूक्ष्मचूर्णीकृताः शुभाः । मस्तु काञ्जिकं तक्रसुष्णोदकं वा...।" रस.र. ।
वैश्वानररसः । पुं । उदराधिकारे रसः । पाठः—"रसकं गन्धकं चाभ्रं शिलाजित्कान्तलौहकं । त्रिकटुत्रिवृकं कुष्ठं निर्गुण्डी सुवर्णी विषम् । अजमोदा च सर्व्वेषां द्वौ द्वौ भागौ प्रकल्पयेत् । चूर्णीकृत्य ततः सर्व्वं निम्बक्वाथेन भावयेत् । भावयेदेकविंशच्च भृङ्गराजेन सप्तधा । मधुना गुड़िकां कृत्वा रजन्यां ताम् प्रदापयेत् । वैश्वानराभिधो योगो जलोदरविशोषणः ।" रस-चि. ।
वैष्किरः । त्रि । विकीर्य्य भक्षणशीले, कुक्कुटादौ । वा-चि-६७. ।
वैष्णवी । स्त्री । अपराजितायाम् । रा-नि-व-४ । तुलसीवृक्षे । श-मा. । अपराजितायाम् ।
वैसारिणः । पुं । मत्स्ये । अम. ।
वोड़ः । पुं । गुवाकवृक्षे । श-र. ।
वोड्रः । पुं । गोनससर्पे । বোড়াসাপ । मत्स्यविशेषे । मे. ।
वोढ़ः । पुं । कदम्बवृक्षे । वै.निघ. ।
वोढा (ढृ) । पुं । वृषभश्रेष्ठे । हये । रा-नि-व-५ । स्त्री । चुद्राग्निकायाम् ।
वोण्टः । पुं । वृन्ते । বোঁটা । श-र. ।
वोदः । त्रि । आर्द्रे ।
वोदालः । पुं । मत्स्यविशेषे । বোয়ালমাছ । श-र. । [प्रणेतरि ।
वोपदेवः । पुं । हृदयदीपकनिघण्टुमन्थग्रन्थप्रणेतरि ।
वोरटः । पुं । कुन्दवृक्षे । कुन्द गाछ । त्रिका. ।

वोरवः । पुं । तन्नामकव्रीहिधान्यभेदे । বোরো धान । गुणाः—"वोरवस्तु बुधैः प्रोक्तः त्रिदोषस्य प्रकोपनः । मधुरश्चाम्लपाकेन व्रीहिः पित्तकारी गुरुः ।" राज.३प. ।
वोलम् । क्ली । (Balsamodendron Myrrh.) Myrrh. तन्नामकसारजद्रव्ये । गन्धरसे । गन्धरस, বোল, হিরাবোল, খুন-খারাপী । हिं द्रा. बोल । मं क बोल । तैं बालिमवीपोलम् । ता. वेलइपपोलम् । वम. रक्ताबोल । तत्पर्य्यायाः,—"रक्तापहं सुरङ्गं सुरसं पिण्डं पिण्डकं विषं निर्लोहं वर्व्वरं चौरभं रक्तागन्धकं रसं रसगन्धं महागन्धं विप्रं शुभगन्धकं विश्वगन्धं गन्धरसं प्राणः त्रयारिः । वै.निघ.२भ.र. पि.चि.वोलपर्पटीरसे । च.द.कुष्ठ.चि. । गुणाः—कटुतिक्तोष्णं कषायं रक्तदोषघ्नं कफपित्तरोगघ्नं प्रदरघ्नञ्च । रा.नि.व.६ । अपिच—"वोलं रक्तहरं शीतं मेध्यं दीपन-पाचनम् । मधुरं कटुतिक्तञ्च दाह-स्वेद-त्रिदोषजित् । ज्वरापस्मार-कुष्ठघ्नं गर्भाशयविशुद्धिकृत् ॥" भा. ।
वोलपत्रम् । क्ली । तैलपत्रसदृश-सुगन्धिपत्रे । च-द-वा-व्या-चि-महाराजप्रसारिणीतैले । "देवपुष्पौ वोलपत्रम् ।"
व्यक्तगन्धा । स्त्री । नीलापराजितायाम् । रा-नि-व-३ । स्वर्णयूथिकायाम् । रा-नि-व-१० । पिप्पल्याम् । वै.निघ. ।
व्यङ्गः । पुं, क्ली । तन्नामकगण्डरोगभेदे । तस्य लक्षणम्—"क्रोधायास-प्रकुपितो वायुः पित्तेन संयुतः । सुखमागत्य सहसा मण्डलं विसृजत्यतः । नीरुजं तनुकं श्यावं सुखव्यङ्गं समादिशेत् ॥" मा-नि. । "परुषं परुषस्पर्शं व्यङ्गं श्यावञ्च मारुतात् । पित्तात्ताम्रान्तमानीलं श्वेतान्तं कफ़मल्कफात् । रक्ताद्रक्तान्तमाताम्रं शोषचिमचिमान्वितम् ॥" वा-उ-३१अ. ।
व्यजनम् । क्ली । तालवृन्ते । পাখা । तद्गुणाः—"मूर्च्छा-स्वेद-तृषा-दाह-श्रमघ्नो व्यजनानिलः ।" तालव्यजनगुणाः—त्रिदोषघ्नम् लघु च । वंशव्यजनगुणाः—रूक्षं उष्णं वात-पित्तकरञ्च । मयूरपुच्छ-वस्त्रव्यजनगुणाः—त्रिदोषघ्नम् । बालव्यजनं तेजस्करं मक्षिकादिनिवारणञ्च । राज-३प. ।
व्यञ्जनम् । क्ली । सूपशाकादिमिष्टान्नेषु । ব্যঞ্জন, তরকারি । "व्यञ्जनं सूप-शाकादि मिष्टान्नं तेमनं च तृतम् ।" रा-नि-व-२० । शाकमत्स्यगुणाः;

—"व्यञ्जनं शाकमत्स्याद्यं हृद्यं हृद्यश्च पुष्टिदं। द्रव्येण येन येनेह व्यञ्जनं मत्स्यमांसयोः। तस्य तस्य तयोर्वै तद्गुणदोषैर्विभावयेत्॥" राज-३प.। श्मश्रुणि। दाड़ि। वै.निघ.। लक्षणे। चिह्ने। व्यक्तीभूतपूर्व्वरूपे। "संस्थानं व्यञ्जनं लिङ्गम्।" मा.पञ्चनिदाने।

**व्यञ्जनकेशी**। स्त्री। मोल्याम्। रा.नि.व.४।

**व्यङ्गकः (नः)**। पुं। एरण्डवृक्षे। अम.। सं.कनकतैले।

**व्यण्डा**। स्त्री। भूम्यामलक्याम्। भूँइ आमला। वै.निघ.।

**व्यतिक्रमः**। पुं। क्रमविपर्य्यये।

**व्यत्यासः**। पुं। परस्परवैपरीत्ये। चा.चि.८प.। "व्यत्यासेन शकृद्रक्तम्।"

**व्यथा**। स्त्री। वेदनायाम्। अम.।

**व्यन्तरः**। पुं। सर्पसहरजातौ। वा.उ.३६अ.।

**व्यवसायः**। पुं। निश्चयबुद्धौ। यथा—वातिक एवायं व्याधिरिदमेवास्य भेषजमिति। च.वि.८अ.।

**व्यवहारिका (का)**। पुं, स्त्री। इङ्गुदीवृक्षे। सम्मार्ज्जन्यां। मे.।

**व्यवायः**। पुं। स्त्रीसेवायाम्। अम.। क्ली। तेजसि। मे.।

**व्यवायशोषः**। पुं। स्त्रीसेवाजन्यशोषरोगे। लक्षणं यथा—"व्यवायशोषः शुक्रस्य क्षयलिङ्गैरुपद्रुतः। पाण्डुदेहो यथा पूर्व्वं क्षीयन्ते चास्य धातवः॥" सु.उ.४१अ.।

**व्यवायी (इन्)**। त्रि। पाकात् प्राक् सर्व्वाङ्ग विसर्पणशीले विषादि-द्रव्ये। "पूर्व्वं व्याप्याखिलं कायं ततः पाकञ्च गच्छति। व्यवायि तद्यथा भङ्गा फेनश्चाहिसमुद्भवम्॥" भा.।

**व्याख्यानम्**। क्ली। अतिशयोपवर्णने। सु.उ. ६५अ.। गूढ़ार्थस्फुटीकरणे।

**व्याघ्रः**। पु। स्वनामख्यात-मांसाशिजातीयमृगे। वाघ। मांसगुणाः सिंहवत्। रा.नि.व.१९। करञ्जवृक्षे। मे.। रक्तैरण्डे। रा.नि.व.८।

**व्याघ्रकरः**। पुं। रक्तैरण्डे। वै.निघ.।

**व्याघ्रखङ्गः**। पुं। व्याघ्रनखे। नखीविशेष। वै.निघ.।

**व्याघ्रघण्टा (ण्टी)**। स्त्री। कोङ्कणे प्रसिद्ध-लताविशेषे। बङ्ग. लघु वाघाण्टी। मं गोविन्दी। गुणाः—"व्याघ्रघण्टा पित्तलोष्णा रुच्या विषकफापहा। फलं चास्यास्तु तिक्तोष्णं शिमूचीकफवातनुत्। त्रिदोषहारिणी प्रोक्ता वैद्यशास्त्रविशारदैः।" वै.निघ.।

**व्याघ्रतरुः**। पुं। रक्तैरण्डे। वै.निघ.।

**व्याघ्रतलः (ला)**। पुं। व्याघ्रनखे। नखी। वै.निघ.। रक्तैरण्डे। श.च.।

**व्याघ्रदलः (ला)**। पुं। रक्तैरण्डे। व्याघ्रनखे। नखी। रा.नि.व.८।

**व्याघ्रनखम्**। क्ली, पुं। नखीनामगन्धद्रव्ये। नखीविशेष। मं उत्. वाघनखा। तत्पर्य्यायाः,—व्याड़ायुधं करजं चक्रकारकं कूटस्थं नखाढ्यं नखो नख्यं व्याघ्रनखी। तद्गुणाः—तिक्तोष्णः कषायः वात-कफघ्नः कण्डू-कुष्ठ-व्रणघ्नः वर्ण्यः सुगन्धश्च। रा.नि.व.१२। अपिच—नखं स्वल्पं नखी प्रोक्ता हनुर्हट्टविलासिनी। नखद्वयं ग्रहघ्नं च-वातासृग्ज्वरकुष्ठहृत्। लघूष्णं शुक्रलं वर्ण्यं स्वादु व्रणविषापहम्॥ अलक्ष्मी-मुखदौर्गन्ध्यहृत् पाकरसयोः कटु॥" भा.। सु.सू.३८अ.एलादिः। समुद्रकः—वा.सू.१५अ.एलादिः। "शुक्ति-व्याघ्रनखः।" सु.हीबचे। मनसा गाछ। रा.नि.व.८।

**व्याघ्रनखी**। स्त्री। व्याघ्रनखे। भा.४म.मद.चि.। "शुचिस्थाने व्याघ्रनख्याः।"

**व्याघ्रनायकः (सेवकः)**। पुं। श्रृगालके। ফেউ, শৃগাল। रा.नि.व.१९।

**व्याघ्रपात् (दः)**। पुं। विकङ्कतवृक्षे। वैंइँची गाछ। भा.। रा.नि.व.९। भेष.शिरोरो.चि. तमराजतैले। विकण्टकवृक्षे। रा.नि.व.११।

**व्याघ्रपुच्छः**। पुं। एरण्डवृक्षे। अम.।

**व्याघ्रपुष्पः**। पुं। व्याघ्रनखे। वै.निघ.।

**व्याघ्ररूपा**। स्त्री। बन्ध्याकर्कट्याम्। वै.निघ.।

**व्याघ्रहस्तः**। पुं। रक्तैरण्डे। रा.नि.व.८।

**व्याघ्राङ्घ्रिजः**। पुं। व्याघ्रनखे। नखीविशेष। वै.निघ.।

**व्याघ्राटः**। पुं। भरद्वाजपक्षिणि। अम.।

**व्याघ्रादनी**। स्त्री। त्रिवृतायाम्। प.मु.।

**व्याघ्रायुधम्**। क्ली। व्याघ्रनखे। नखीविशेष। वै.निघ.।

**व्याघ्रास्यः** । पुं । विड़ाले । श.च. ।

**व्याघ्री** । स्त्री । कण्टकार्य्याम् । प.मु. । रा.नि.व.४ । च.द.यक्ष्म.चि.जीवन्त्याद्यघृते । "व्याघ्रीगोक्षुरसाधिताम् ।" च.द.ज्व.चि. "व्याघ्रीदुस्पर्शगोक्षुरैः ।" वराटिकाभेदे । কড়িবিশেষ । रा.नि.व.१३ । व्याघ्रपदयाम् । बाघिनी । व्याघ्रनख्याम् । नखीविशेष । च.द.वा.व्या.चि. ।

**व्याघ्रीयुक् (युगम्)** । स्त्री, क्ली । बृहत्याम्, कण्टकार्य्याञ्च । चि.क्रा.क. ।

**व्याड़ः** । पुं । सर्पे । हिंस्रे । श्म. ।

**व्याड़म्बः** । पुं । रक्तैरण्डे । वै.निघ. । [श्म. ।

**व्याड़ायुधम्** । क्ली । नखीनामगन्धद्रव्ये । नखी ।

**व्याधभीतः** । पुं । मृगे ।

**व्याधिः** । पुं । रोगे । রোগ । हिं बेमारी । पुरुषदुःखसंयोगा व्याधयः । ते चतुर्विधाः शारीरागन्तु-मानस-स्वाभाविकभेदेन । तत्रागन्तवोऽभिघातजन्याः, शारीरास्त्वन्नपानमूलाः वातादिवैषम्यमूलाश्च । मानसाः क्रोधादिका इच्छाद्वेषभेदैर्भवन्ति । स्वाभाविकाः क्षुत्पिपासादिकाश्च । सु.सू.१अ. । तच्च दुःखं त्रिविधम् आध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति । तत्तु दुःखं सप्तविधे व्याधावुपनिपतति । ते पुनः सप्त व्याधयः यथा—आदिबलप्रवृत्ताः जन्मबलप्रवृत्ताः दोषबलप्रवृत्ताः संघातबलप्रवृत्ताः कालबलप्रवृत्ताः दैवबलप्रवृत्ताः स्वभावबलप्रवृत्ताश्चेति । तत्रादिबलप्रवृत्ताः शुक्रशोणितदोषान्वयाः कुष्ठार्शःप्रभृतयः । शेषाणां विशेषाः तत्तत्पर्य्याये मृग्याः । सु.सू.२४अ. । रोगः दोषवैषम्यरूपः । "रोगस्तु दोषवैषम्यम् । रोगा दुःखस्य दातारो ज्वरप्रभृतयो हि ते ॥" ते च रोगाः केचित् स्वाभाविकाः केचिदागन्तवः केचिन्मानसाः केचित् कायिकाः केचित् कर्म्मजाः केचिद्दोषजाः केचित् साध्याः केचिद्याप्याः केचिदसाध्याश्च । तस्य च रोगस्य विज्ञानं पञ्चधा 'हेतुस्तदनु संप्राप्तिः पूर्व्वरूपञ्च लक्षणं । तथैवोपशयः पञ्च........ ।" भा. । कुष्ठौषधौ । कुड़ । श्म. । र.स.र.स्तनरोगचि. । See रोगः । [काले । मा.नि. ।

**व्याधिकालः** । पुं । रोगाणां वृद्धिहानिहेतुभूते

**व्याधिघातः (कः)** । पुं । स्थूले आरग्वधवृक्षे । বড় সোন্দাল গাছ । रा.नि.व.९ । च.द. ज्व.चि. । "गवाक्षा व्याधिघातकः ।"

**व्याधिघ्नः (जित्)** । पुं । आरग्वधवृक्षे । ल.द. ।

**व्याधितः** । पुं । रोगिणि । रा.नि.व.२० ।

**व्याधिनाशनः** । पुं । द्वीपान्तरवचायाम् । তোপচিনি । वै.निघ. ।

**व्याधिरिपुः** । पुं । कर्णिकारवृक्षे । रा.नि.व.९ ।

**व्याधिविपरीतः** । पुं । रोगविपरीतौषधादौ । यथा—अतिसारे मलरोधके पाठादौ ; मसूरादिपथ्ये । उदावर्त्ते अधोवायुनिःसारके तथा देवगुरुसेवादौ च । मा.नि. ।

**व्याधिहन्ता (र्त्ता)** । पुं । वाराहीनामकन्दशाके । শূয়ার আলু । रा.नि.व.७ ।

**व्याध्यर्गलः** । पुं । दामोदरकृतवैद्यकग्रन्थे ।

**व्यानः (वायुः)** । पुं । देहस्थवायुविशेषे । ব্যানবায়ু । "कृत्स्नदेहचरो व्यानः रससंवहनोद्यतः । स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि । क्रुद्धश्च कुरुते रोगान् प्रायशः सर्व्वदेहगान् ॥" सु.नि.१अ. ।

**व्यापत्** । पुं । मृत्तौ । अधिकलवणादिभक्षणजन्यरोगसङ्कटे । वैद्यकम् ।

**व्यापम्** । क्ली । कुष्ठौषधौ । कुड़ । श्म. ।

**व्यामः** । पुं । तिर्य्यग्विस्तृतबाह्वोर्यदन्तरं स व्यामः । এক বাঁও । "व्यामः स्मृतस्तु तयोस्तिर्य्यग्बाह्वोर्यदन्तरम् ।" रा.नि.व.१८ ।

**व्यामणम्** । क्ली । व्यामे । এক বাঁও ।

**व्यायामः** । पुं । वेगकृद्व्यापारे । च.सू.१५अ. । अङ्गादिचालने । কুস্তি, মল্লশ্রম । शरीरायासजननकर्म्मणि । भा.म.४भ.शिरोरो.चि. । "शरीरायासजननं कर्म्म व्यायामसंज्ञितम् ।" गुणादि—तत्कृत्वा तु सुखं देहं विमृद्नीयात्समन्ततः । शरीरोपचयः कान्तिर्गात्राणां सुविभक्तता । दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा ॥" इत्यादि । सु.चि.२४अ. । "व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनां । स च शीते वसन्ते च तेषां पथ्यतमो मतः । सर्व्वेष्वृतुषु सर्व्वैर्हि मर्त्त्यैरात्महितार्थिभिः । शक्त्यर्द्धेन च कर्त्तव्यो व्यायामो हन्त्यतोऽन्यथा । कुक्षौ ललाटे ग्रीवायां यदा घर्म्मः प्रवर्त्तते । शक्त्यर्द्धं तं विजानीयाद यावदुच्छ्वासमेव च । लाघवं कर्म्मसामर्थ्यं स्थैर्य्यं क्लेशसहिष्णुता । दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते । व्यायामं कुर्व्वतो

नित्यं विरुद्धमपि भोजनम्। विदग्धमविदग्धं वा निर्दोषं परिपच्यते। वयो वर्णं शरीरस्य देश कालमथापि च। समीक्ष्य कुर्य्याद्व्यायामं युक्त्या शक्त्या च बुद्धिमान्। रक्तपित्ती क्षयी शोषी कासी श्वासी क्षतातुरः। भुक्तवान् स्त्रीषु च क्षीणो व्यायामं परिवर्ज्जयेत्। वातपित्तामयी बालो वृद्धो जीर्णश्च तं त्यजेत्। अतिव्यायामतः कासो रक्तपित्तप्रतानको। श्रमः क्लमः क्षयस्तृष्णा ज्वरश्छर्दिश्च जायते॥" राज.२प.।

**व्यायामशोषः**। पुं। अतिव्यायामजन्यशोषरोगे। लक्षण—"व्यायामशोषी भूयिष्ठमेभिरेव-मुपद्रुतः। लिङ्गैरुर.क्षतसमैः संयुक्तश्च क्षतं विना॥"

**व्यायोजिमः**। पुं। स्यूतागुप्तविषमपाली। सु.सू.१६अ.।

**व्यालः**। पुं। व्याघ्रे। दुर्दान्तगजे। रा.नि.व.१८। रक्तचित्रके। रा.नि.व.६। चित्रकहक्ते। भा.पू.१ भ.। सर्पे। श्वापदे। अम.।

**व्यालकरजः**। पुं। व्याघ्रनखे। नखीविशेष। वै.निघ.।

**व्यालखङ्गः**। पुं। व्याघ्रनखे। नखीविशेष। रा.नि.व.१२।

**व्यालगन्धा**। स्त्री। लाङ्गलीनामकन्दशाके। विषलाङ्गलिका। रा.नि.व.७।

**व्यालजिह्वा**। स्त्री। महासमङ्गायाम्। रा. नि.व.४।

**व्यालदंष्ट्रः**। पुं। गोक्षुरक्षुपे। रा.नि.व.४।

**व्यालनखः**। पुं। व्याघ्रनखे। नखीविशेष। रा.नि.व.१२। सुषीहवे। रा.नि.व.८।

**व्यालपत्रः**। पुं। एर्व्वारुकलतायाम्। क्षेत-कॉंकुड़। कथित्।

**व्यालपत्रा (त्रिका, त्री)**। स्त्री। कर्कटीभेदे। कॉंकुड़विशेष। रा.नि.व.७।

**व्यालपाणिजः**। पुं। व्याघ्रनखाख्यगन्धद्रव्ये। नखी। रा.नि.व.१२।

**व्यालप्रहरणम्**। क्ली। व्याघ्रनखे। नखी। वै.निघ.।

**व्यालवलः**। पुं। व्याघ्रनखे। नखी। रा.नि. [व.१२।

**व्यालमृगः**। पुं। चित्रकव्याघ्र। चिता बाघ। भारतम्।

**व्यालस्वः**। पुं। रक्तैरण्डे। वैद्यकम्।

**व्यालवल्करी**। स्त्री। नागवल्ल्याम्। पान गाछ। वै.निघ.। [वै.निघ.।

**व्यालवेणी**। स्त्री। देवदाल्याम्। पीत घोषा।

**व्यालायुधम्**। क्ली। नखीनामगन्धद्रव्ये। च. टी.मथुरा.। पुं। व्याघ्रनखे। नखी। रा.नि.व.१२।

**व्यालीढ़(दष्टक)म्**। क्ली। सर्पदंशनभेदे। लक्षणं यथा—"एकं दंष्ट्रापदं द्वे वा व्यालीढ़ाख्य-मशोणितम्।" वा.उ.३६अ.।

**व्यालुप्त(दष्टक)म्**। क्ली। सर्पदंशनभेदे। लक्षणं—"दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं...।" वा. उ.३६अ.।

**व्यावर्त्तः (कः)**। पुं। चक्रमर्दे। चाकन्दा गाछ। रा.नि.व ४। नाभिकण्टके। श्र.च.।

**व्यासः**। पुं। परिमाणभेदे। वेध। श्र.र.।

**व्यासदीपप्रजा**। स्त्री। वन्ध्याकर्कट्याम्। वै.निघ.

**व्युष्टम्**। क्ली। प्रभाते। पर्य्युषिते। फले। हे. च.। त्रि। उषिते। दग्धे। मे.।

**व्यूहः**। पुं। देहे। विका.।

**व्योम**। क्ली। जले। मे.। आकाशे। अम.। अभ्रधातौ। रा.नि.व.१३। शूल.चि.पीड़ाभञ्जिरसे। वै.निघ.वा.व्या.चि.वातविध्वंसरसे। भैष.स्त्री.रो. चि.प्रदरारिरसे।

**व्योमचारी(रिन्)**। पुं। पक्षिणि। मे.।

**व्योमनासिका**। स्त्री। भारतीपक्षिणि। त्रिका.।

**व्योमपूरम्**। क्ली। सुगन्धतृणे। वै.निघ.।

**व्योमवल्लिका (ल्ली)**। स्त्री। आकाशवल्ल्याम्। आलोकलता। रा.नि.व.३।

**व्योमोदकम्**। क्ली। आकाशसलिले। रा.नि. व.१४।

**व्योषम्**। क्ली। त्रिकटुनि। शुंठ, पिपुल, मरिच। भा.। एतच्च शिरोविरेचने शस्तम्। वा. सू.१५अ.।

**व्योषाद्यगुग्गुलुः**। पुं। स्थौल्यरोगे गुग्गुलुः। पाठः—"व्योषाग्नित्रिफलामुस्तविडङ्गैः गुग्गुलुं समम्। खादेत्......॥" रस.र.।

**व्योषाद्यघृतम्।** क्ली। अर्शसि घृतम्। पाठः—"व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि। साधितं पिबतः सर्पिः पतन्त्यर्शांसि निश्चितम्॥" पलाशक्षारात् षड्गुणपरिस्रावितक्षारवारि ग्राह्यं।

**व्योषाद्यचूर्णम्।** क्ली। रक्तार्शसि रक्तातिसारे च हितम्। "व्योषाऽग्निपुष्करविड़ङ्गतिलाभयानां चूर्णं गुड़ेन सहितन्तु सदोपयोज्यम्।" सर्व्वं समभागम्। अन्यत् ज्वरातीसारे—त्रिकटु, इन्द्रयव, निमछाल, चिराता, भीमराज, चिता, कट्की, आकनादि, दारुहरिद्रा, ও আতইচ প্রত্যেক সমভাগ, সর্ব্বসমান কুড়চিছালের চূর্ণ। মাত্রা ৪ মাষা। च.द.।

**व्योषाद्यलौहम्।** क्ली। विद्रध्यधिकारे लौहम्। लक्षणं—"व्योषं त्रिवृत्त्रिकटुकरोहिणी च सायोरजस्तु त्रिफलारसेन। पीतं कफोत्थं शमयेत्तु शोथं गव्येन मूत्रेण हरीतकी च॥" रस.चि.।

**व्रजभूः।** पुं। कैलिकदम्बवृक्षे। श.च.।

**व्रणः।** पुं, क्ली। तन्नामकरोगे, क्षतादौ। ব্রণরোগ, ঘা। स द्विविधः शारीर आगन्तुश्चेति। तयोः शारीरः पवन-पित्त-कफ-शोणित-सन्निपातनिमित्तः। आगन्तुरपि पुरुषपशुपक्षिव्यालसरीसृपप्रपतन-पीड़न प्रहाराग्निक्षार-विषतीक्ष्णौषध शकलकपालशृङ्गचक्रेषु-परशुशक्ति-कुन्ताद्यायुधाद्यभिघात निमित्तः। तस्य लक्षणं द्विविधं सामान्य वैशेषिकञ्च। तत्र सामान्यं रुग्व्रणगात्रविचूर्णने व्रजतीति व्रणः। विशेषलक्षणं पुनर्वातादिलिङ्गविशेषः।" सु.चि. १अ.। स पुनः पञ्चदशविधः। पृथग्-दोषैस्त्रयः संसर्गजास्त्रयः सन्निपातेनैकः एवम्भूता रक्तसहितैः सप्त, एवं चतुर्द्दश, रक्तेन केवलेनैक इति पञ्चदश। "स पञ्चदशधा दोषैः सरक्तैस्तत्र मारुतात्। श्यावः कृष्णोऽरुणो भस्मकपोतास्थिनिभोऽपि च। मस्तुमांसपुलाकाम्बुतुल्यतन्वल्पसंस्रुतिः। निर्मांसस्तोदभेदाढ्यो रूक्षश्चटचटायते। पित्तेन क्षिप्रजः पीतो नीलः कपिलपिङ्गलः। मूत्रकिंशुकभस्माम्बुतैलाभोष्णबहुस्रुतिः। क्षारोक्षित-क्षतसमव्यथारागोष्मपाकवान्। कफेन पाण्डुः कण्डूमान् बहुश्वेतघनस्रुतिः। स्थूलौष्ठः कठिनः स्नायुशिराजालततोऽल्परुक्। प्रवालरक्तो रक्तेन सरक्तं पूयमुद्गिरेत्। वाजिस्थानसमो गन्धे युक्तो लिङ्गैश्च पैत्तिकैः। द्वाभ्यां त्रिभिश्च सर्वैश्च विद्याल्लक्षणसङ्करात्।" इति। जिह्वाप्रभो मृदुः श्लक्ष्णः श्यावौष्ठ-पिटिकः समः। किञ्चिदुन्नतमध्यो वा व्रणः शुद्धोऽनुपद्रवः। इति। त्वङ्मांसिपशिरास्नायुसन्ध्यस्थीनि व्रणाश्रयाः। कोष्ठो मर्म्म च तान्यष्टौ दुःसाध्यान्युत्तरोत्तरम्। सुसाध्यो नत्वमांसाग्निवर्चोबलवति व्रणः। वृत्तोदीर्घस्त्रिपुटकश्चतुरस्राकृतिश्च यः। तथा स्फिक्-पायु-मेढ्रौष्ठ-पृष्ठान्तर्वक्त्रगण्डगः। कृच्छ्रसाध्योऽक्षि दशन-नासिकापाङ्ग-नाभिषु। सेवनीजठरश्रोत्रपार्श्वकक्षास्तनेषु च।" इति। वा.उ.२५अ.। तथा—त्वङ्मांस-शिरा-स्नाय्वस्थि-सन्धि-कोष्ठ-मर्म्माणीति। तत्राद्यैकवस्तुसन्निवेशी त्वग्भेदो व्रणः सूपचारः शेषाः स्वयमवदीर्य्यमाणा दुरुपचाराः। तत्रायतश्चतुरस्रः वृत्तस्त्रिपुटक इति व्रणाकृतिसमासः शेषा विकृताकृतयो दुरुपक्रमा भवन्ति। इति। व्रणवेदना तु बहुधा; तद्यथा—तोदनभेदनताड़नछेदनायमनमन्थनविक्षेपणचुमचुमायननिर्दहनावभञ्जनस्फोटन-विदारणोत्पाटनकम्पनविविधशूलविश्लेषणविकिरण-पूरणस्तम्भनस्वप्नावकुञ्चनाङ्कुशिका भवन्ति। इति। सु.सू.२२अ.। व्रणबन्धनं चतुर्दशविधं तानि च कोशदामस्वस्तिकानुवेल्लितप्रतोलीमण्डलस्थगिकायमकखट्वाचीनविबन्धवितानगोफणाः पञ्चाङ्गुलीति चतुर्दश। व्रणायतनविशेषेण तद्बन्धनानि त्रिधा गाढ़समशिथिलानीति। सु.सू.१८अ.। वाभटस्तु उत्सङ्गं पञ्चाङ्गुलीस्थाने पञ्चाङ्गीति स्वीकरोति। विशेषाः स्वस्वपर्य्यायेषु मृग्याः।

**व्रणकृत्।** पुं। भल्लातकवृक्षे। ভেলা গাছ। र.मा.।

**व्रणकेतुः (घ्नी)।** पुं, स्त्री। दुग्धफेन्याम्। रा.नि.व.५।

**व्रणग्रन्थिः।** पुं। रोगभेदे। ব্রণের গাঁটা। लक्षणं—"अरूढ़े रूढ़मात्रे वा व्रणे सर्व्वरसाशिनः। सान्द्रे वा बन्धरहिते गात्रे ऽश्माभिहते ऽथवा। वातासमसृतं दुष्टं संशोष्य ग्रथितं व्रणम्। कुर्य्यात् सदाहः कण्डूमान् व्रणग्रन्थिरयं स्मृतः॥" वा.उ. २९अ.।

**व्रणघ्नी।** स्त्री। लघुकारवेल्लके। ছোট উচ্ছে। वै.निघ.।

**व्रणजिता।** स्त्री। मुण्डाम्। মুণ্ডীরী। वै.निघ.।

**व्रणद्विट्।** पुं। ब्राह्मणयष्टिकायाम्। वामनहाटी। श.च.।

**व्रणधूपनः** । पुं । तन्नामकधूपदानविधौ । यथा —"सरावसम्पुटे चिप्ता कल्कमन्नाद्दीपितम् । छिद्रे नैवं निवेश्याथ व्रणं तेनैव धूपयेत् ॥" अत्र व्रणनाड़िका दशाङ्गुलमिता कार्य्या । भा· ।

**व्रणरोपणरसः** । पुं । क्षुद्ररोगाधिकारे औषधविशेषः । पाठः—"गन्धेशाहिफणातुल्य वाहं जम्बीरमर्दितं । कुमार्य्या नरमूत्रं च चिञ्चकेण च सिन्धुना । सौवर्च्चलेन च पृथक् युक्ता च विधुधैः क्रमात् ॥" मात्रा ६ र· । अनु· मधु । रस·चि· ।

**व्रणशुक्रम्** । क्ली । नेत्रतारकागत रोगविशेषे । "निमग्नरूपं तु भवेद्धि कृष्णे सूच्येव विद्धं प्रतिभाति यद् वै । स्रावं स्रवेदुष्णमतीव चापि तत् सव्रणं शुक्रमुदाहरन्ति ॥" भा· ।

**व्रणशोथः** । पुं । व्रणनिमित्त-श्वयथौ । तस्य पूर्व्वरूपं शोथस्य कटुशोत्थानम् । स षट् वातपित्तकफसन्निपातरक्तागन्तुभेदेन । यथा—"पृथक् समस्तदोषोत्था रक्तागन्तुजौ तथा । व्रणशोथाः षडेते स्युः संयुक्ताः शोथलक्षणैः ॥" मा·नि· ।

**व्रणशोधनः** । पु । कम्पिल्लके । कमलागुँड़ि । वै·निघ· ।

**व्रणशोषः** । पुं । क्षतजन्यशोषरोगे । निदानं—"रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् । व्रणितस्य भवेच्छोषो स चासाध्यतमो मतः ॥" मा·नि· ।

**व्रणस्थानम्** । क्ली । व्रणवस्तुनि । व्रणेर स्थान । तानि च त्वङ्मांससिरास्नाय्वस्थिसन्धिकोष्ठमर्माण्यष्टौ भवन्ति । सु·सू·२२ध· ।

**व्रणस्रावः** । पुं । चतुर्द्दशविध-व्रण-निःस्रावे । तद् यथा—"लसीका जल पूयासृक्-हरितारुणपिञ्जराः । कषाय नील-हरित स्निग्ध-रुक्ष सितासिताः ॥ इति स्रावैः समुद्दिष्टैर्व्रणस्रावाश्चतुर्द्दश ॥"

**व्रणहः** । पुं । एरण्डवृक्षे । श·च· । स्त्री (हा) । गुडूच्याम् । श·र· ।

**व्रणहरी** । स्त्री । लाङ्गलिकौषधौ । विषलाङ्गुलिया । वै·निघ· ।

**व्रणहृत्** । पुं । भल्लातकवृक्षे । ভেলা গাছ । कलिकारीवृक्षे । विषलाङ्गुलिया । रा·नि·व ४ ।

**व्रणायामः** । पु । वातव्याधिविशेषे । लक्षणं —"मर्म्माश्रितं व्रणं प्राप्य वायुर्यः सर्व्वदेहगः । वेगैरानामयेद्देहं व्रणायामन्तु तं त्यजेत् ॥" मा·नि· ।

**व्रणारिः** । पुं । बोलनामगन्धद्रव्ये । गन्धरसे । रा·नि·व·६ । अगस्तिवृक्षे । বাসনা গাছ । रा·नि·व·१० ।

**व्रणोपक्रमः** । पुं । व्रणचिकित्सायाम् । व्रणोपक्रम, षष्टिविधोऽपतर्पणादिभेदेन । यथा—अप तर्पणमालेपः परिषेकोऽभ्यङ्गः स्वेदो विम्लापनमुपनाहः पाचनं विस्रावनं स्नेहो वमनं विरेचनं छेदनं भेदनं दारणं लेखनमेषणमाहरणं व्यधनं विस्रावनं सीवनं सन्धानं पीड़नं शोणितास्थापनं निर्व्वापणमुत्कारिका कषायो वर्त्तिः कल्कः सर्पिस्तैलं रसक्रियावचूर्णनं व्रणधूपनमुत्सादनमवसादनं मृदुकर्म्म दारुणकर्म्म क्षारकर्म्माग्निकर्म्म कृष्णकर्म्म पाण्डुकर्म्म प्रतिसारणं रोमसंजननं लोमापहरणं वस्तिकर्म्मोत्तरवस्तिकर्म्म बन्धः पत्रदानं कृमिघ्नं वृंहणं विषघ्नं शिरोविरेचनं नस्यं कवल-धारणं धूमो मधुसर्पिर्यन्त्रमाहारो रक्षाविधानञ्चेति । सु· चि·१ध· ।

**व्रतम्** । क्ली । इन्द्रियाकामनियमे । च·सू.१घ· ।

**व्रततिः (ती)** । स्त्री । लतायाम् । अम· ।

**व्रतादेशः** । पुं । उपनयने । स्मृतिः ।

**व्रतोपायनम्** । क्ली । मद्दिचकाद्य-पिष्टकभेदे ।

**व्रश्चनम्** । क्ली । छेदने । पुं । स्वर्णादिच्छेदके अस्त्रे । ছেনী । अम· ।

**व्रह्मा (न्)** । पुं । विधातरि । तत्प्रादुर्भावः यथा —"विधातायर्व्वसर्व्वस्वमायुर्व्वेदं प्रकाशयन् । स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम् ॥" इत्यादि । भा. ।

**व्रीड़ा** । स्त्री । वनकुलत्थिकायाम् । प.मु· । लज्जायाम् ।

**व्रीहिः** । पुं । प्रावृट्कालजातधान्ये । আউ ধান্য । हैमन्तिकशूकधान्यमात्रे च । नै· । तस्य लक्षणम्—"वार्षिकाः कथिताः शाला व्रीहयश्चिरपाकिनः ।" तद्भेदा यथा—"कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि । शालामुखो जतुमुख इत्याद्या व्रीहयः स्मृताः ॥" गुणाः—"व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः । अल्पाभिष्यन्दिनो बद्धवर्च्चस्काः षष्टिकैः समाः । कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे ॥" भा·पू·१म·धा·व· । "मधुराम्लपाकश्च व्रीहिः पित्तकरो गुरुः ।" च.सू. २७अ. । गौरो मधुरः शीतलः पित्तघ्नः कषायः स्निग्धो हृद्यः कृमिकफहरः तापरक्तहरश्च । तथा,

पुष्टिकरः श्रमघ्नः वीर्य्यवृद्धिकरो रुच्य आनन्दजनको वातजनकश्च । रा.नि.व.१६ ।

**व्रीहिकाञ्चनः** । पुं । मसूरकले । विका. ।

**व्रीहितुण्डिका** । स्त्री । देवधान्ये । देधान । वै.निघ. ।

**व्रीहिधान्यम्** । क्ली । षष्टिकादिधान्ये । वै. [निघ. ।

**व्रीहिपर्णिका (र्णी)** । स्त्री । शालपर्ण्याम् । शालपानि । रा.नि.व.४ ।

**व्रीहिभेदः** । पुं । चीनाकधान्ये । कांनीधान । र.मा. ।

**व्रीहिमुखम्** । क्ली । व्यधनार्थं व्रीहिमुखाकारमुखशस्त्रे । सु.सू.८अ. । तत् षडङ्गुलायतं द्व्यङ्गुलवृत्तं चतुरङ्गुलफलकञ्च कार्य्यम्, तन्मुखञ्च व्रीहिविकारं संमूढकुण्ठञ्च कार्य्यम् । इति सु.टी.ड. भोजः ।

**व्रीहिराजिकः** । पुं । चीनाकधान्ये, कङ्गुधान्ये । कांनी धान । मे. ।

**व्रीहिश्रेष्ठः** । पुं । शालिधान्ये । हेमन्तधान । रा.नि.व.१६ ।

**व्रीह्यास्यम्** । क्ली । व्रीहिमुखास्त्रभेदे । च.द. ।

---

## श ।

**शंवः** । पुं । मुषलाग्रस्थलौहमण्डले । लोहार शुलो । धरणिः ।

**शंवरम्** । क्ली । जले । अम. । रा.नि.व.१४ ।

**शकटः** । पुं, क्ली । धवहक्षे । धाओया गाछ । प.मु. । शरीरे । वै.निघ. । तिनिशवृक्षे । ज्ञाङ्गल गाछ । रा.नि.व.८ ।

**शकटाख्यः (कः)** । पुं । धवहक्षे । धाओया गाछ । र.मा. ।

**शकलम्** । क्ली । त्वचि । गुड़त्वक् । रा.नि.व.६ । आमलकी । पद्मदण्डे । पद्मेर डाँटा । वै.निघ. । वल्कले । छाल । विका. । शल्के । आँइश । पुं, क्ली । खण्डे । अंशे । अम. ।

**शक(कु)ली (न्)** । स्त्री, पुं । मद्गिलमत्स्ये । शिङ्गालमाछ । अम.भ. । गुणाः—वात-कफकारत्वम् । अत्रि.२२अ. । महाशकुलमत्स्ये । बड़ शउल, पिपलेशोउल । गुणाः—"शकुलो रोहिताचारा भूमौ शायरत्यसौ । गुर्वी पाके च मधुरा भेदिनी दोषकोपनी ॥" राज.३प. ।

**शकुनः** । पुं । पक्षिणि । गृध्रे । शकुनि । मे. । क्षुद्रचटके । शामा पाखी । वै.निघ. । क्ली । शुभसूचकनिमित्ते । सगुन् । मे. ।

**शकुनघ्ना** । स्त्री । क्षुद्रक्षुद्रगोधिकायाम् । क्षुद्र टिकटिकि । विका. ।

**शकुनाहृतः (त)** । पुं । बालरोगविशेषे । शकुनिग्रह । मत्स्यविशेषे । वै.निघ. । शालिधान्यभेदे । भा.पू.१भ.शा.व. । गुणाः—शालिवत् ।

**शकुनिः** । पुं । पक्षिणि । पाखी । अम. । क्षुद्रचटके । शामा पाखी । गृध्रे । रा.नि.व.१९ । चित्रपक्षिणि । चील पाखी । वै.प. ।

**शकुनिप्रपा** । स्त्री । पक्षिपानीयशालायाम् । पाखीर जलपानस्थान । हारा. ।

**शकुनी** । स्त्री । तन्नामकबालग्रहविशेषे । लक्षणं—"स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः संस्राविव्रणपरिपीड़ितः समन्तात् । स्फोटैश्च प्रचिततनुः सदाहपाकैर्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥" सु.उ.२७अ. । श्यामाकपक्षिणि । शामा पाखी । रा.नि.व.१९ ।

**शकुन्तः (न्तिः)** । पुं । पक्षिणि । अम. । काकभेदे । कुक्कुटभेदे । वै.निघ. । भासपक्षिणि । उणा. । कीटविशेषे । मे. ।

**शकुन्दः** । पुं । श्वेतकरवीरे । रा.नि.व.१० ।

**शकुलः** । पुं । मत्स्यविशेषे । শোল মাছ । गुणाः —"शकुली मधुरो ग्राही रुच्यः पित्तास्रजिद्गुरुः ।" राज.३प. ।

**शकुलगण्डः** । पुं । मत्स्यविशेषे । শাল মাছ । त्रिका. ।

**शकुला** । स्त्री । कटुरोहिण्याम् । कट्की । रा.नि.व.६ ।

**शकुलादनी** । स्त्री । कटुक्याम् । कट्की । रा.नि.व.६ । च.सू.४अ. भेदनीये । जलपिप्पल्याम्, कच्छटशाके । কাচড়াদাম । र.मा. । गजपिप्पल्याम । गण्डूपदे । কেঁচো । कट्फले । विश्वः ।

**शकुलार्भकः** । पुं । गड़कमत्स्ये । গড়ুই বা ল্যাটা মাছ । शब्द. ।

**शकुलाक्षकः (का)** । पुं, स्त्री । श्वेतदूर्वायाम् । गण्डदूर्वायाम् । शब्द. ।

**शकुलाक्षी** । स्त्री । गण्डदूर्वायाम् । গেঁটে দূর্বা । रा.नि.व.८ ।

**शकृत्** । क्ली । विष्ठायाम् । शब्द. ।

**शकृत्करिः (री)** । पुं, स्त्री । गोवत्से । त्रिका. ।

**शकृत्कारः** । पुं । मलत्यागकारके । व्याक. ।

**शकृद्द्वारम्** । क्ली । मलद्वारे । वै.श. ।

**शकृद्भवः** । त्रि । द्रवरूपे । भा.म.४अ. वालुकाण्टकचि. ।

**शकृद्रसः** । पुं । गोमयरसे । গোবরের রস । सु.सू.२८अ. ।

**शक्करः (रिः)** । पुं । वृषे । वै.श. । त्रिका. ।

**शक्तावः** । पुं । भृष्टयवादिचूर्णे । ছাতু ।

**शक्तिकः** । पुं । गन्धके । रस.र.रस.कौ. भैष. वातव्याधये ।

**शक्तिपर्णः** । पुं । सप्तपर्णवृक्षे । ছাতিম গাছ । जटा. ।

**शक्तुः** । पुं, क्ली । भर्जितयवादिचूर्णे । ছাতু । "धान्यानि भ्राष्ट्रभृष्टानि यवे......।" रा.नि.व. १६ । "यवपिष्टानि शक्तवः ।" भा. । "धाना भृष्टयवे भूम्नि स्त्रियां पुं भूम्नि शक्तवः ।" जटा. । यवशक्तुगुणाः,—यवजाः शक्तवः शीता दीपना लघवः सराः । कफपित्तहरा रुक्षा लेखनाश्च प्रकीर्त्तिताः ॥ ते पीता बलदा वृष्या वृंहणा भेदनास्तथा । तर्पणा मधुरा रुच्याः परिणामे बलावहाः ॥ कफपित्तश्रमक्षुत्तृड्व्रणनेत्रमयापहाः । प्रशस्ता घर्म्मदाहाय व्यायामार्त्तशरीरिणाम् ॥ चणक-शक्तुगुणाः,—निस्तुषैश्चणकैर्भृष्टैस्तुर्य्यांशैश्च यवैः कृताः । शक्तवः शर्करासर्पिर्युक्ता ग्रीष्मेऽतिपूजिताः ॥ शालि-शक्तुगुणाः,—शक्तवः शालिसम्भूता वह्निदा लघवो हिमाः । मधुरा ग्राहिणो रुच्याः पथ्याश्च बलशुक्रदाः ॥ शक्तुभोजनविधिर्यथा न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा बहून् । न जलान्तरितानद्भिः शक्तूनद्यान्न केवलान् ॥ पृथक् पानं पुनर्द्दानं सामिषं पयसा निशि । दन्तच्छेदनमुष्णञ्च सप्त शक्तुषु वर्ज्जयेत् ॥

**शक्तुकः** । पुं । सन्नामकविषभेदे । लक्षणं यथा —"यद्ग्रन्थिः शक्तुकेनेव पूर्णमध्यः स शक्तुकः ।" भा.पू.१भ.विष.व. । क्ली । शक्तौ । ছাতু । सा.कौ. ।

**शक्तुपिण्डी** । स्त्री । शक्तुकृतपिण्डाकारभोज्यद्रव्ये । ছাতুর নাড়ু । गुणाः—"गुर्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्य्ययात् ।" राज.३प. ।

**शक्तुफला (ली)** । स्त्री । शमीवृक्षे । শাঁই গাছ । शब्द. । श.र. ।

**शक्त्ववलेहिका** । स्त्री । शक्तुकृतावलेहिकायाम् । ছাতুর অবলেহ । गुणाः—"शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ।" राज.३प. ।

**शक्रः (कः)** । पुं । कुटजवृक्षे । কুড়চি গাছ । प.मु. । च.द.मेद.चि.न्यग्रोधाद्यचूर्णे । रस.र. कच्छटावलेहे । अर्ज्जुनवृक्षे । मे. । इन्द्रयवे । भैष.च.द.मालती.चि. ।

**शक्रगोपः** । पुं । इन्द्रगोपकीटे । আষাঢ়ে পোকা । जटा. ।

**शक्रचापसमुद्भवा** । स्त्री । बलायाम् । वै.निघ. ।

**शक्रजः (जातः)** । पुं । काके । त्रिका. । श.र. ।

**शक्रजा** । स्त्री । इन्द्रवारुण्याम् । রাখালশশা । सु.चि.३८अ. ।

**शक्रदारुः** । पुं । शालवृक्षे । तैलदेवदारुवृक्षे । वै.निघ. ।

**शक्रद्रुमः** । पुं । वकुलवृक्षे । भा.म.१भ.ज्वरोपद्रवचि. द्वात्रिंशत्क्वाथे । "ग्योणाक-शक्रद्रुमैः ।" तैलदेवदारौ । भा. ।

**शक्रनेमी** । स्त्री । ह्रस्वमेषशृङ्ग्याम् । शक्रकुटजवृक्षे । देवदारुवृक्षे । वै.निघ. ।

**शक्रपर्य्यायः** । पुं । कुटजवृक्षे । कुड़चि गाछ । प.मु. ।

**शक्रपादपः** । पुं । कुटजवृक्षे । कुड़चि गाछ । रा.नि.व.९ । देवदारुवृक्षे । अम. ।

**शक्रपुष्पम्** । क्ली । इन्द्रयवे । वै.निघ.जीर्णज्वरचि.लवङ्गादिकषाये ।

**शक्रपुष्पा (ष्पी)** । स्त्री । नागदमन्याम् । नागदना । र.मा. । लाङ्गलीवृक्षे । विषलाङ्गुलिया । अम. । [लाङ्गुलिया । र.मा. ।

**शक्रपुष्पिका** । स्त्री । अग्निशिखावृक्षे । विष-

**शक्रबीजम्** । क्ली । इन्द्रयवे । रा.नि.व.९ ।

**शक्रभूभवा** । स्त्री । इन्द्रवारुण्याम् । राखालशशा । श.च. ।

**शक्रभूरुहः** । पुं । कुटजवृक्षे । कुड़चि गाछ । वै.निघ. ।

**शक्रमाता** । स्त्री । भार्ग्याम् । बामुनहाटी । रा.नि.व.६ ।

**शक्रमूर्द्धा (न्)** । पुं । वल्मीके । त्रिका. ।

**शक्रयवः** । पुं । इन्द्रयवे । वै.निघ.२भ.अ.सा.चि. । भैष. बालरो.चि. ।

**शक्रवल्ली** । स्त्री । इन्द्रवारुणीलतायाम् । राखालशशा । रा.नि.व ३ ।

**शक्रवीजम्** । क्ली । इन्द्रयवे ।

**शक्रशाखी (इन्)** । पुं । कुटजवृक्षे । भा. ।

**शक्रशिराः** । पुं । वल्मीके । रा.नि.व.१३ ।

**शक्रसुधा** । स्त्री । कुन्दुरुखोटी । सरलेर आठा । श.च. ।

**शक्रसृष्टा** । स्त्री । हरीतक्याम् । त्रिका. ।

**शक्राख्यः** । पुं । उलूके, पेचके । त्रिका. ।

**शक्राणी** । स्त्री । निर्गुण्ड्याम् । नीसिन्दा ।

**शक्राशनम्** । क्ली । भङ्गायाम् । भाङ्, सिद्धि । गुणाः—"शक्राशनन्तु तीक्ष्णोष्णं मोहकृत् कुष्ठनाशनम् । बलमेधाग्निकृत् श्लेष्मदोषहारि रसायनम् ॥" राज. । पुं । विजयावृक्षे । सिद्धि गाछ । प.मु. । कुटजवृक्षे । कुड़चि गाछ । श.च. । इन्द्रयवे । वै.निघ.२भ.दुर्जलज्व.चि.ज्ञानोदयरसे ।

**शक्राह्वः** । पुं । इन्द्रयवे । रा.नि.व.९ । भा.म.१भ.सन्ततादिज्व.चि. । "शक्राह्वत्रिफलामृतम् ।" स्त्री (ह्वा) । इन्द्रयवे । वा.उ.५अ. भूतरावघृते ।

**शक्रेन्द्रः** । पुं । इन्द्रगोपकीटे । आषाढ़े पोका । वै.निघ.२भ.अर्शःचि.त्रिफलागुग्गुलौ ।

**शक्वरी** । स्त्री । अङ्गुल्याम् । आङ्गुल । उणा. ।

**शक्वा (न्)** । पुं । गजे । उणा. ।

**शङ्करः** । पुं । श्वेतार्के । श्वेत आकन्द । भीमसेनीकर्पूरे । कपोते । वै.निघ. । वैद्यविनोदग्रन्थकारे । नाड़ीपरीक्षाकारे ।

**शङ्करप्रियः** । पुं । द्रोणपुष्प्याम् । घलघसा । प.मु. । तित्तिरिपक्षिणि । शब्दकल्पद्रुमः ।

**शङ्करमत(लौह)म्** । क्ली । अर्शसि लौहम् । भा. । रस.चि.९अ. ।

**शङ्करशुक्रम्** । क्ली । पारदे । भा.ज्व.चि. कल्पतरौ ।

**शङ्करस्वेदः** । पुं । आमवातहरे स्वेदविशेषे । "कार्पासास्थि·कुलत्थिका·तिल· यवैरेरण्डमूलातसी· वर्षाभूशणबीजकाञ्जिकयुतैरेकीकृतैर्वा पृथक् । स्वेदः स्यात्......॥" भैष. । "शकृता महिषाश्वानां गोमयेन तथैव च । अग्नितप्तेन यः स्वेदः शङ्करस्वेद उच्यते" ग.द.१८ष. ।

**शङ्करा (री)** । स्त्री । शमीवृक्षे । शाँई गाछ । रा.नि.व.८ । मञ्जिष्ठायाम् । श.र. ।

**शङ्करादिः** । पुं । शुक्लार्कवृक्षे । श्वेत आकन्द । रा.नि.व.१० ।

**शङ्करावासः** । पुं । भीमसेनीकर्पूरे । रा.नि.व.१२ ।

**शङ्कराह्वया** । स्त्री । ह्रस्वशमीवृक्षे । वै.निघ. ।

**शङ्कितः** । पुं । चोरकनामगन्धद्रव्ये । हिं चोरा । गेँटेला । रा.नि.व.१२ ।

**शङ्कुः** । पुं । मत्स्यविशेषे, जलजन्तुविशेषे । शाकोच इति भाषा । चर्क.चि.४र्थ शतके । अस्त्रे । कीलके । मे. । पत्रशिराजाले । पाताय शिर । मेट्रे । हे.च. । नखीनामगन्धद्रव्ये । नखी । जटा. ।

**शङ्कुकर्णः** । पुं । गर्दभे । त्रिका. ।

**शङ्कुचिः** । पुं । मत्स्यविशेषे । शङ्कु माछ । श.र. ।

**शङ्कुतरुः (वृक्षः)** । पुं । शालवृक्षे । श.र. । र.मा. ।

**शङ्खफलिका (फली)।** स्त्री। क्षुद्रशमी-वृक्षे। छोट शाँइ गाछ। रा.नि.व.८।

**शङ्खमुखी।** स्त्री। निर्विष-जलौकायाम्। निर्विष जोँक। सु.सू.१३अ.। See जलायुका।

**शङ्खुला।** स्त्री। यन्त्रिकायाम्। जाँति। शब्द-कल्प:। उत्पलपत्रायाम्। उत्पा.।

**शङ्खोच: (चि:)।** पुं। मत्स्यविशेषे। शाँकोच माछ। जटा.। श.र.।

**शङ्ख:।** पुं, क्ली। तन्नामकस्थावरविषभेदे। स च तिविषाष्टम:। शङ्खीविषे, दारुमोचभेदे वा। सेँको, शामुक। चवि.३स्थान.५६अ.। सामुद्र कीटस्थजन्तुविशेषे। शाँक। तत्पर्य्याया;—कम्बु: कम्बु: कम्बोज: जल: विरेख: जलज: अर्णोभव: पावनध्वनि: अन्त:कुटिल: शङ्खक: महानाद: श्वेत: पूत: मुखर: दीर्घनाद: बहुनाद: हरिप्रिय:। गुणा:—"शङ्खकूर्म्मादय: स्वादुरसपाका मरुन्नुद:। शीता: स्निग्धा हिता: पित्ते वर्चस्या: श्लेष्मवर्द्धना:॥" सु.सू.४६अ.। कटु: शीत: पुष्टि-वीर्य्य-बलद: गुल्म शूल-कफ-श्वास-विषघ्न। रा.नि.व.१९। "कङ्कुष्ठं गैरिकं शङ्खं काशीशं टङ्कणन्तथा। नीलाञ्जनं शुक्तिभेदा: क्षुल्लका: सवराटिका:। जम्बीरवारिणा स्विन्ना: क्षालिता: कोष्णवारिणा। शुद्धिमायान्त्यमी योज्या भिषग्भिर्योगसिद्धये।" इति शङ्खादिशुद्धि:। सा. कौ.। शङ्खनाभौ। शङ्खनाभि। र.सा.सं. प्रदरान्तकरसे। नखीनामगन्धद्रव्ये। नखी। रा. नि.व.१२। च.द. ज्वरातिसा.चि. कलिङ्गाद्यगुडिकायाम्। कर्णसमीपदेशे। रा.नि.व.१८। भ्रुवो: पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये मर्म्मद्वये। तच्च सद्योमारकम्। सु.शा.६अं.।

**शङ्खक:।** पुं। शङ्खे। शाँक। मे.। नील काशीशे। नीलहिराकस। वै.निघ.। शिरोरोगभेदे। तस्य लक्षणं—"रक्तपित्तानिला: दुष्टा: शङ्खदेशे विमूर्च्छिता:। तीव्ररुग्दाहरागं हि शोथं कुर्व्वन्ति दारुणं। स शिरो विषवद्वेगी निरुध्याशु गलं तथा। त्रिरात्राज्जीवितं हन्ति......।" मा.नि.। अ.हृन्द्रिय.८अ.। अन्यविधो यथा—"शङ्खाश्रितो वायुरुदीर्णवेग: कृतानुयात: कफपित्तरक्तै:। रुज: सुतीव्रा: प्रतनोति मूर्द्ध्नि विशेषतश्चापि हि शङ्खकन्तु॥ सुकष्टमेनं खलु शङ्खकाख्यं महर्षयो वेदविद: पुराणा:। व्याधिं वदन्त्युदगतमृत्युकल्पं भिषक् सहस्रैरपि दुर्निवारम्॥"

**शङ्खकन्द:।** पुं। शङ्खालौ। शाँक आलु। प.तु.।

**शङ्खकुसुमा।** स्त्री। शङ्खपुष्प्याम्। श्वेत अपराजिता। रा.नि.व.३।

**शङ्खचरी (चर्च्ची)।** स्त्री। ललाटिकायाम्। त्रिका.। श.र.।

**शङ्खचूर्णम्।** क्ली। शङ्खभस्मकृतचूर्णे। शाँकेर चूर्ण; गुणा:—कटु क्षारम् उष्णं परं कृमिघ्नञ्च। राज.३प.। See चूर्णम्।

**शङ्खज:।** पुं। पारावताण्डाकारस्थूलमौक्तिके। बड़ शङ्खमुक्ता। शब्दकल्प:।

**शङ्खद्रावक:।** पुं। शीहयकृदधिकारे द्रावक विशेष:। शङ्खद्रावक। शङ्खादिद्रव्यमद्रवणात्द्राव-कौषधे। पाठ:—शङ्खचूर्णं यवक्षारं सर्जिक्षारं टङ्कणं विट् सैन्धवं सौवर्चलं शाम्भरि करर्चं स्फटिकारीं नृसारदं समभागं काचकूप्यां निधाय वारुणीयन्त्रेण साधयेत्। भैष.।

**शङ्खद्रावी (न्)।** पुं। अम्लवेतसे। अम्लवेतस। रा.नि.व.६।

**शङ्खधरा।** स्त्री। हिलमोचिकायाम्। हिञ्चे। भा.पू.१भ.शा.व.।

**शङ्खधवला।** स्त्री। शुक्लयूथिकायाम्। श्वेत जुँइ। वै.निघ.।

**शङ्खनख:।** पुं। क्षुद्रशङ्खे। जोड़ङ्गा। अम. म.। नखीभेदे। श.र.। वृहन्नख्याम्। र.मा.।

**शङ्खनखा (खी)।** स्त्री। वृहन्नख्याम्। र.मा.।

**शङ्खनाभि:।** स्त्री। सुगन्धद्रव्यविशेषे। शङ्ख-नाभि। इयं जम्बीररसेन भाविता शुद्धिमायाति। सा.कौ.। मा.उपदं.।

**शङ्खनाम्नी।** स्त्री। शङ्खपुष्प्याम्। श्वेत अपरा-जिता। वै.निघ.।

**शङ्खपाल:।** पुं। स्वनामप्रसिद्धे दर्वीकरमहा-सर्पे। सु.कल्प.४अ.।

**शङ्खपुष्पिका।** स्त्री। श्वेतयूथिकायाम्। श्वेता-पराजितायाम्। श्वेत जुइ, श्वेत अपराजिता। सि.यो.क्षु.टी.उन्मा.चि.।

**शङ्खपुष्पी।** स्त्री। (Andropogon aciculartum, or Canscora decussata.) लताहचविशेषे। शङ्खाहुलुइ, डानकुनी

इति केचित् स्वर्णमारणे। प.मु.।वम्.शंखोनी। तत्पर्य्यायाः,—चण्डा सुपुष्पी शङ्खाह्वा कम्बुमालिनी पीतपुष्पा कम्बुपुष्पा मेध्या मलविनाशिनी किरीटी शङ्खकुसुमा भूलग्ना। गुणाः—हिमा तिक्ता मेधास्वरकरी ग्रहभूतादिदोषघ्नी च। रा.नि.व.३। "शङ्खपुष्पी सरा मेध्या हृष्या मानसरोगहृत्। रसायनी कषायोष्णा स्मृति-कान्ति-बलाग्निदा। दोषापस्मार-भूतास्र कुष्ठ-क्रिमि-विषप्रणुत्॥" भा.गु.व.। श्वेतापराजितायाम्। শ্বেত অপরাজিতা।

**शङ्खमालिनी**। स्त्री। शङ्खपुष्पीलतायाम्। रा.नि.व.३।

**शङ्खमुखः**। पुं। कुम्भीरे। हे.च.।

**शङ्खमूलम्**। क्ली। श्वेतमूलके। হাঁসা মূলা। र.नि.व.७।

**शङ्खयूथिका**। स्त्री। शुक्लयूथ्यां। শ্বেত জুই। वै.निघ.।

**शङ्खवटी**। स्त्री। अग्निमान्द्ये शूलाधिकारे च हिता वटी। पाठ.—"चिञ्चाक्षारपलं पटुव्रजपलं निम्बूरसे कल्कितं तस्मिन् शङ्खपलं सुतप्तमसकृन्निर्वाप्य शीर्णावधि। हिङ्गुव्योषपलं रसामृत बलीन्निक्षिप्य निष्कांशिकान् बद्धा शङ्खवटी क्षयग्रहणिकारुक्-पक्तिशूलादिषु।" যাবৎ চূর্ণ হইয়া না যায়, তাবৎ শঙ্খকে বারংবার পোড়াইয়া নেবুর রসে ফেলিবে, চূর্ণবৎ হইলে তুলিবে। তেঁতুলক্ষার ৮ তো. পঞ্চলবণ মিলিত ৮ তো. উক্ত শঙ্খচূর্ণ ৮ তো. হিঙ্গু, শুঁট, পিপুল ও মরিচ মিলিত ৮ তো. পারা, বিষ ও গন্ধক প্রত্যেকে অর্দ্ধ তোলা, একত্র নেবুর রসসহ মাড়িয়া অম্লরস হইলে বটী করিবে। रस.चि.। भैष.।

**शङ्खविषम्**। क्ली। (Arsenicum album. White arsenic. विषभेदे। সেঁকো। हिंदा. साम्बलखार, शनुबुलखार. शंखशनुबुल। तैं तेल्लपाषाणम्। ता. वेल्लइपाषाणम्। एतत्तु धातुविशेषं शुभ्रवर्णं स्वादगन्धहीनञ्च। गुणाः—कटूष्णं बल्यं वर्ण्यं पुष्टिदं ज्वर वमन-श्वास-कास प्रदर वातरोगघ्नञ्च।

**शङ्खसङ्काशः**। पुं। शङ्खालौ। শাঁক আলু। वै.निघ.।

**शङ्खाख्यः**। पुं। हट्टनखि। বড়নখী। र.मा.।

**शङ्खालुः (कः)**। पुं। श्वेतालौ। শাঁক আলু। वै.निघ.।

**शङ्खावर्त्तः**। पुं। शम्बूकावर्त्तनामभगन्दररोगे। See शम्बूकावर्त्तः। शीर्षशृङ्गाटकेषु तन्नामकास्थिसन्धिभेदे। सु.शा.५ष.।

**शङ्खास्थि**। क्ली। मस्तकस्यास्थिद्वये। মাথার খুলি। च.शा.७अ.। पृष्ठास्थनि। रा.नि.व.१८।

**शङ्खाहुली**। स्त्री। शङ्खपुष्प्याम्। শ্বেত অপরাজিতা। रा.नि.व.३।

**शङ्खाह्वया (ह्वा)**। स्त्री। शङ्खपुष्पीलतायाम्। শ্বেত অপরাজিতা। रा.नि.व.३। वै.निघ.२भ. छर्दि.चि.धान्यकयूषे।

**शङ्खिका**। स्त्री। चोरपुष्प्याम्। চোরহুলী। श.च.।

**शङ्खिनः**। पु। शिरीषवृक्षे। वै.निघ.।

**शङ्खिनिका**। स्त्री। ग्रन्थिपर्णवृक्षे। গেঁঠেলা। वै.निघ.।

**शङ्खिनी**। स्त्री। चोरपुष्प्याम्। চোরহুলী, ভাঁটুই इति पूर्व्ववङ्गे। प्रयो.गोविन्दस्थते। "क्रमुककुटजगणा शङ्खिनी-चर्म्मपाह्वा।" यवतिक्तायाम्। श्वेतबुह्मायाम्। रा.नि.व.३। प.मु.। सु.सू.३৫ष.। च.सू.४ष.। वा.सू.१५अ.। चर्म्मकषायाम्। চামরকষা। च द.परिणामशूले। "समला शङ्खिनी श्वेता।" श्वेतापराजितायाम्। वै.निघ.। शुक्लपुन्नागवृक्षे। विश्वः। श्वेतचुक्रायाम्। শ্বেতচুকা। श.र.।

**शङ्खिनीफलः**। पुं। शिरीषवृक्षे। रा.नि.व.৫।

**शङ्खिनीवासः**। पुं। शाखोटवृक्षे। শ্যাওড়া গাছ। श.च.।

**शङ्खोदधिमलः**। पुं। समुद्रफेने। वै.निघ.।

**शङ्खोदरी**। स्त्री। तृणविशेषे। बम्. शुलतुरा। गुणाः—उष्णा कफ वातघ्नी शूलाम वातनाशिन च। वै.निघ.।

**शची**। स्त्री। स्पृक्कायाम्। পিড়িং। वै.निघ.। शतावर्य्याम्। শতমূলী। मे.।

**शठः**। त्रि। अम्लरसे। व्याक.।

**शटिः (टी)**। स्त्री। शठ्याम्। শঠী, বন আদা। श.र.। च.सू४ष.।

**शठ्कम्।** क्ली। सघृतजलमिश्रितशालिचूर्णं। सदेशात्र শটী। "शालिचूर्णं घृतं तोयं मिश्रितं शट्कं भवेत्।" भा.।

**शठम्।** क्ली। तीक्ष्णलौहे। रा.नि.व.१३। तगरपुष्पे, तगरपादिकि। তগরপাদুকা। रा.नि.व.१०। कुङ्कुमे। रा.नि.व.१२। पुं। धुस्तूरवृक्षे। रा.नि.व.२३। चित्रकवृक्षे। तालवृक्षे। स्त्री। आम्रातकवृक्षे। वै.निघ.। [नि.व.४।

**शठाङ्गा (ख्वा)।** स्त्री। अम्लष्ठायाम्। रा.

**शठिका (ठी)।** स्त्री। (Curcuma gedoaria. Syn. Curcuma gerumbet.) Long and round gedoary. स्वनामख्यातमूले। गन्धशटीति च लोके। শটী। हिं. कचूर। बम्. कचोरा, कापुरकाचरी। तें किचलिएगड्डल। तत्पर्य्यायाः,—गन्धमूली षड्ग्रन्थिका पलाशः शठिका शठी षठी सटी कर्च्चुरः कर्व्वूरः कचुरः सुगन्धा गन्धमूलं गन्धमूलकः गन्धमूला गन्धोलिः गन्धशटी गन्धसटी गन्धवधूः गन्धपलाशी जीमूतमूलं कच्छोरा हिमजा हिमा हैमी षड्ग्रन्था षड्ग्रन्थी सुव्रता गन्धोली पलाशा पलाशिका पृथुपलाशिका शटिः अम्लनिशा सुगन्धमूला गान्धारी शटिका समुद्रा वर्षा दूर्व्वागन्धा अम्लहरिद्रा सौम्या हिमोद्भवा वधूः। गुणाः— वात-कफ-श्वास-कास-ज्वर विनाशिनी। राज.। "सुगन्धिः कटुपाका स्यात् कुष्ठार्शोव्रणकासनुत्। उष्णा लघुश्च......... ..। भा.। "शठी तिक्ता च कटुका कोष्णा तीक्ष्णाग्निदीपनी। सुगन्धी रुचिरा लघ्वी मुखस्वच्छकरी मता। कोपनी रक्तपित्तस्य गलगण्डादिरोगहा। कुष्ठार्शोव्रणकासघ्नी श्वास-गुल्म-कफापहा। त्रिदोष-कृमिवातानां ज्वरप्लीहादिनाशकृत्।" वै.निघ.। See कर्च्चूरः। আরণ্যকার্দ্রকে। বন আদা। च.द. कफज्व.चि.निम्बादिः। "शठीभूनिम्बपौष्करम्।" च.द.ज्व.चि.किराततिक्तादौ। भा.म.१भ. कण्टकारज्व.चि.। "शठीकलिङ्गकिलिमाभयाः।"

**शठीरूपा।** स्त्री। कन्दगुडूच्याम्। वै.निघ.।

**शठ्यादिः।** पुं। त्रिदोषज्वरे कषायविशेषः। "शठीपुष्करमूलञ्च भार्गी शृङ्गी दुरालभा। गुडूची नागरं पाठा किरातं कटुरोहिणी। एषः शठ्यादिको वर्गः सन्निपातज्वरापहः। कास-हृदयग्रह-पार्श्वार्त्ति-श्वास तन्द्रासु शस्यते॥" च.द.ज्व.चि.।

**शणः।** पुं। (Crotalaria juncea.) Indian hemp. स्वनामख्यातक्षुपे। শণ গাছ। हिं शण। तें शणमनुवेल, जेनपनर, रेल्लचेट्टु। ता. जेनपनर। दा. जनवकनर। तत्पर्य्यायाः,—माल्यपुष्पः वसनः कटुतिक्तकः निशावनः दीर्घशाखः त्वक्सारः दीर्घपल्लवः। प.मु.। गुणाः—अम्लः कषायो मलगर्भास्रपातनः वान्तिकृत् वातकफघ्नश्च। रा.नि.व.४। तत्पुष्पं रक्तपित्ते हितं मलरोधकञ्च। बीजं शोणितशुद्धिकरम्। राज.३य.। क्ली। शणे। हे.च.।

**शणकन्दः।** पुं। चर्म्मकषायाम्। চামরকষা। रस.र.उद.चि.वह्निमलातकरसे।

**शणघण्टा (घण्टिका)।** स्त्री। शणपुष्प्याम्। বন শণই। रा.नि.व.४.।

**शणपर्णी।** स्त्री। अश्मपर्ण्याम्। व्रहव। श.र.।

**शणपुष्पिका।** स्त्री। शणपुष्प्यां। आढक्याम्। व्रहव। भा.पू.१भ.धा.व.।

**शणपुष्पी।** स्त्री। शणसदृशविटपे क्षुपे, महाशणे। ঝনঝনিয়া, বন শণ। हिं घागरी, शणह, वनशणह। शणहुली। तत्पर्य्यायाः,—वृहत्पुष्पी शणिका शणघण्टिः शणपर्णी शणघण्टिका पीतपुष्पा स्थूलफला लोमशा माल्यपुष्पिका। सु.सू.३८अ.संशोधने। च.सू.१।४अ.। गुणाः—कषाया कफ-वातघ्नी अजीर्णज्वरघ्नी वामनी रक्तदोषघ्नी च। रा.नि.व.४। जवाहके। र.मा.।

**शणमूलम्।** क्ली। शणशिफायाम्। सु.सू.३८अ.।

**शणालः (लुकः)।** पुं। आरग्वधवृक्षे। সোনাল বা শোণালু গাছ। श.र.।

**शणिका।** स्त्री। शणपुष्प्याम्। বন শণ। रा.नि.व.४। [सके। अम.।

**शण्डम्।** क्ली। पद्मिन्याम्। श.र.। पुं। नपुं-

**शण्ढः।** पुं। क्लीवे। হিজড়ে। अ.टी.भ.। वन्ध्यपुरुषे। जटा.। धननंवलिके। খোজা। अम.।

**शतकुन्दः।** पुं। करवीरे। "शतकुन्दः करवीरे।" रा.नि.व.२३।

**शतकुलीरकः।** पुं। वायव्य-कीटविशेषे। सु.कल्प.८अ.। See कीटः।

**शतकुसुमा।** स्त्री। शतपुष्पायाम्। গুলফা च.सिद्धिः।

**शतकोटि।** क्ली। हीरके। रा.नि.व.१३। See वज्रम्।

**शतकौम्भ(क)म्।** क्ली। स्वर्णे। वै.निघ.।

**शतक्रतुद्रुमः।** पुं। कृष्णकुटजवृक्षे। वै.निघ.।

**शतक्रतुयवः।** पुं। इन्द्रयवे। वै.निघ.।

**शतखण्डम्।** क्ली। सुवर्णे। श.च.।

**शतग्रन्थिः।** स्त्री। दूर्व्वायाम्। नीलदूर्व्वायाम्। रा.नि.व.८।

**शतघ्नी।** स्त्री। वृश्चिकाल्याम्। বিছাতী। करञ्जवृक्षे। मे। गलरोगविशेषे। लक्षणं यथा— "वर्त्तिर्घना कण्ठनिरोधिनी या चितातिमात्रं पिशितप्ररोहैः। नानारुजोच्छ्रायकरी त्रिदोषाज् ज्ञेया शतघ्नीव शतघ्न्यसाध्या॥" सु.नि.१६अ.।

**शतच्छदः।** पुं। काष्ठकुट्टपक्षिणि। কাঠঠোকরা পাখী। त्रिका.।

**शतजटा।** स्त्री। शतमूल्याम्। पि.क्र.क.।

**शतदन्तिका।** स्त्री। नागदन्त्याम्। হাতিশুঁড়ে। रा.नि.व.५।

**शतदलमल्लिका।** स्त्री। स्वनामख्यातपुष्पक्षुपे। শতদলমল্লিকা। प.मु.।

**शतदला।** स्त्री। शतपत्रीपुष्पवृक्षे। শেউতি গোলাপ। रा.नि.व.१०।

**शतद्रुः।** स्त्री। नदीविशेषे। तज्जलं शीतलं लघु स्वादु सर्व्वरोगहरं निर्मलं दीपनं पाचनं बुद्धिमेधाबलकरञ्च। रा.नि.व.१४।

**शतधा।** स्त्री। दूर्व्वायाम्। श.च.।

**शतधौतघृतम्।** क्ली। यत् पुनः पुनः सन्ताप्य शीताम्भसा निर्वाप्यते तथाविधसर्पिषि। শতধৌত ঘি। ईशानदेवः। "शतं वारान् शीततोयेन धौतं फेणितं घृतम्।" डल्वणः। शि.यो.दाहचि.। तद्गुणाः—वातपित्तदाहव्रणनाशित्वम्।

**शतनेत्रिका।** स्त्री। शतावर्य्याम्। শতমূলী। रा.नि.व.४।

**शतपत्रम्।** क्ली। कमले। पुष्पभेदे। रा.नि.व.२३। वा.उ.३२अ.। शतदलकमले। रक्तपद्मे। वा.च.सू.४अ.।

**शतपत्रः (कः)।** पुं। मयूरे। मे.। राजशुके। সুগ্রী পাখী। अयं मतुदजातीयः। रा.नि.व.२३। हे.च.। सु.सू.४६अ.। (कः) काष्ठकुट्टकपक्षिणि। अम.। কাট-ঠোকরা। च.सू.२७अ.। सारसपक्षिणि। मे.।

**शतपत्रा (त्रिका, त्री)।** स्त्री। शतदलमल्लिकायाम्। শ্বেত বা পাটলবর্ণ গোলাপ, শেউতী গোলাব। हिं सेवती, गुलाब। मं सेवती। कं सेवतिगे। तें चेमन्तिचेट्टु। तत्पर्य्यायाः,—शतपत्री गन्धाढ्या सौम्यगन्धा शिवप्रिया सुशीता सुवृत्ता सुमनाः शतपत्रिका। गुणाः— शीतला तिक्ता कषाया कुष्ठघ्नी मुखस्फोटहरा रुच्या दाहपित्तघ्नी च। रा.नि.व.१०। "शतपत्री हिमा हृद्या ग्राहिणी शुक्रला लघुः। दोषत्रयास्रजिद् वर्ण्या तिक्ता कट्वी च पाचनी॥" भा.। नीलदूर्व्वायाम्। रा.नि.व.८।

**शतपदी।** स्त्री। शतमूल्याम्। শতমূলী। रा.नि.व.४। कर्णजलौकायाम्। কেন্নুই, কাণবিছা, কাণকোটারি। हिं खान् खोजारा। हे.च.। सा चाष्टधा—परुषा कृष्णा चित्रा कपिलिका पित्तिका रक्ता श्वेता अग्निप्रभा चेति। ताभिः दष्टे शोफो वेदना दाहश्च हृदये भवति। सु.कल्प.८अ.।

**शतपद्मम्।** क्ली। श्वेतकमले। र.मा.।

**शतपर्व्वा[न्](र्विका)।** पुं.स्त्री। वंशे। বাঁশ। रा.नि.व.७। च.द.अस्र.चि.वरुणाद्यघृते। (र्विका) यवे। श.र.। शतपोरनाम्नि इक्षुभेदे। हिं शतपोरक। गुणाः—"शतपर्व्वा भवेत्किञ्चित्कोशकारगुणान्वितः। विशेषात् किञ्चिदुष्णश्च सक्षारः पवनापहः॥" भा.। स्त्री (र्व्वा, र्व्विका)। दूर्व्वायाम्। वचायाम्। বচ। मे.। शीतुद्रतैले। प्रयोग.। श्वेतदूर्व्वायाम्। प.मु.। च.चि.३अ.। कटुकायाम्। কট্‌কী। रा.नि.व.६। नीलदूर्व्वायाम्। रा.नि.व.८। कलम्बीशाके। भा.पू.१भ.शा.व.।

**शतपात् (द्)।** स्त्री। शतपद्याम्। কাণকোটারী। जटा.।

**शतपादकः।** पुं। अग्निप्रकृतिक-कीटविशेषे। सु.काल्प.८अ.।

**शतपादिका।** स्त्री। काकोल्याम्। কাঁকলা। जटा.। कर्णजलौकायाम्। কাণকোটারী। श.र.।

**शतपादी।** स्त्री। श्वेतकटभीवृक्षे। रा.नि.व.९। See कटभी। नीलापराजितायाम्। वै.निघ.।

**शतपुत्री ।** स्त्री । ह्रस्वशतमूल्याम् । শতমূলী । र.मा.सं. । लघुघोषायाम् । ক্ষুদ্র ঘোষা । वै.निघ ।

**शतपुष्पः ।** पुं । षष्टिकशालिधान्ये । ষেটে ধান । वै.निघ. । स्त्री (ष्पा, ष्पिका । Peucedanum Sowa. P. Graveslons.) Drill Seeds. शताह्वायाम् । শুল্‌ফা । श.र. । रा.नि.व.४ । हिं सोया । तै पेद्दसदापचेट्टु । तत्पर्य्याया,—सितच्छत्रा अतिच्छत्रा मधुरा मधुरिका अवाक्पुष्पी कारवी शताह्वा शताह्वा छत्रा शतपुष्पिका मिशिः मिश्री मिषिः मिषिः माधवी घोषा ताम्रपर्णी ताम्रपर्णी शालेया शीतशिवा शालीना वनजा संहिता पुष्पिका सुपुष्पी सरसा वल्या । गुणाः—"शतपुष्पा त्रिदोषघ्नी मेध्या पथ्या रुचिप्रदा ।" अत्रि.९अ. । "शतपुष्पा तु मधुरा वातपित्तहरा गुरु ।" राज.३प. । च.द.वा.ज्व.चि. पिप्पल्यादिः । अपि च—"शतपुष्पा लघुस्तीक्ष्णा पित्तकृद्दीपनी कटुः । उष्णा ज्वरानिलश्लेष्मव्रणशूलाक्षिरोगहृत् ॥ मिश्रेया तद्गुणा प्रोक्ता विशेषाद् योनिशूलनुत् । अग्निमान्द्यहरी हृद्या बद्धविट् क्रिमिशुक्रहृत् । रूक्षोष्णा पाचनी कासवमिश्लेष्मानिलान् हरेत् ॥" भा. । मिषिभेदे । গৌরী । गवेधुकायाम् । रा.नि.व.४ । सु.सू.३९अ. । च.सू.४अ. ।

**शतपुष्पादल(शाक)म् ।** क्ली । शताह्वापत्रे । শুল্‌ফা শাক । मं सोउप । कं सब्बशिगे । गुणाः—मधुरमुष्णं गुल्मशूलघ्नं वातघ्न दीपनं पित्तहृत् रुच्यञ्च । रा.नि.व.७ ।

**शतपोदः (कः) ।** पुं । शतपोनकनामभगन्दरविशेषे । शूकरोगे । कश्चित् ।

**शतपोनकः ।** पुं, क्ली । शूकरोगविशेषे । तच्च मेढ्रसमन्तादणुमुखच्छिद्रव्याप्तं वातशोणितजं भवति । सु.नि.१४अ. । वातजन्यभगन्दररोगे । निदानम्—"कषाय रूक्षैरति-कोपितोऽनिलस्त्वपानदेशे पिड़कां करोति यां । उपेक्षणात् पाकमुपैति दारुणं रुजा च भिन्नारुणफेनवाहिनी । तत्रागमो मूत्रपुरीषरेतसां व्रणैरनेकैः शतपोनकं वदेत् ॥" मा.नि. । "दीर्य्यतेऽणुमुखैश्छिद्रैः शतपोनकवत् क्रमात् । अच्छं स्रवद्भिरास्रावमजस्रं फेणसंयुतम् । शतपोनकसंज्ञोऽयम्...... ॥" वा.उ.२८अ. ।

**शतपोरकः (पोरः) ।** पुं । इक्षुविशेषे । गुणाः—वंशकेक्षुवत् ईषदुष्णः वातशान्तिकरश्च । सु.सू.४५अ. ।

**शतप्रसूना ।** स्त्री । शताह्वायाम् । শুল্‌ফা । रा.नि.व.४ ।

**शतप्रासः ।** पुं । करवीरवृक्षे । अम. ।

**शतफलः ।** पुं । वंशे । বাঁশ ।

**शतबाहुः ।** पुं । वायव्यकीटविशेषे । सु.कल्प.८अ. ।

**शतभीरुः ।** स्त्री । मल्लिकापुष्पवृक्षे । अम. ।

**शतभेदकः (नः) ।** पुं । अम्लवेतसे । मद.व.६ ।

**शतमानः ।** पुं । रूप्यमले । রূপার খাদ । आढ़कमाने । अम.भ. ।

**शतमूला ।** स्त्री । नीलदूर्व्वायाम् । रा.नि.व.८ । महाशतमूल्याम् । শতমূলী । रा.नि.व.४ । वचायाम् । रा.नि.व ६ ।

**शतमूलिका ।** स्त्री । द्रवन्त्याम् । দন্তীবিশেষ । रा.नि.व.५ । महामूषिककर्ण्याम् । বড় ইন্দুর-কাণী । वै.निघ. ।

**शतमूली ।** स्त्री । शतावर्य्याम् । শতমূলী । रा.नि व.४ ।

**शतवल्ली ।** स्त्री । काकोल्याम् । কাঁকলা । र.मा. ।

**शतवीर्य्या ।** स्त्री । शतमूल्याम् । শতমূলী । द्राक्षायाम् । কিস্‌মিস্ । रा.नि.व.२३ । महाशतावर्य्याम् । বড় শতমূলী । रा.नि.व.४ । श्वेतदूर्व्वायाम् । শ্বেত দূর্ব্বা । र.मा. । दूर्व्वायाम् । ज.द. ।

**शतवेधनी ।** स्त्री । चुक्रिकायाम् । চুকাপালং ।

**शतवेधी (इन्) ।** पु, क्ली । अम्लवेतसे । रा.नि.व.६ । स्त्री (धी) । चुक्रे । চুকাপালং । भा.पू.१भ.शा.व. ।

**शतश्लोकी ।** स्त्री । वोपदेवकृते चन्द्रकलानामके द्रव्यगुणे ।

**शतश्लोकीटीका ।** स्त्री । कृष्णदत्तकृतशतश्लोकीटीकायाम् ।

**शतसुता ।** स्त्री । शतावर्य्याम् । रस.र.शिरोरो.चि.वदणाद्यघृते ।

**शता** । स्त्री । शतावर्य्याम् । वै·निघ·२भ.वा·व्या. चि. एरण्डपाके ।

**शताङ्गः** । पुं । तिनिशवृक्षे । স্যাদন, তিনিশ । रा·नि·व.९ ।

**शताङ्कुलः** । पुं । तालवृक्षे । कश्चित् ।

**शतायुषः** । पुं । मनुष्ये । वै निघ. ।

**शतारुः** (रु) (रुणी) । क्ली, स्त्री । कुष्ठरोगभेदे । लक्षणं—"रक्तश्यावं सदाहर्त्तिं शतारुः स्याद्बहुव्रणम् ।" भा·कुष्ठ.चि· ।

**शतावरी** । स्त्री । (Asparagus racemosus, or Asparagus sarmentosus) स्वनामख्यातमधुरवर्गीयमूलविशेषे । শতমূলী । हिं सफेदमुसली, शतावर, छोटी शतावरी । मं सा नोकांटिसेर । कं किरियखासड़ि । तें चल्ल. चल्लगडडलु । बम्. शतावरी । तत्पर्य्यायाः,—बहुपुत्री बहुसुता वरी इन्दीवरी ऋष्यप्रोक्ता नारायणी शतमूली शतमूलिका शतमूला षड्भुजा: अभीरुः अभीरुपत्री भीरुः भीरुपत्री महापुरुषदन्ता रश्मिणी शतसुता द्वीपशत्रुः द्वीपिशत्रुः ऋष्यगता काञ्चनकारिणी मदभञ्जिनी महाशीता शतपदी शता पीवरा पीवरी हृष्या दिव्या दीपिका दरकण्टिका सूक्ष्मपत्रा सूक्ष्मपत्रिका सुपत्रा बहुमूला शताह्वया शताह्वा स्वादुरसा लघुपर्णिका आत्मगुप्ता जटामूला शतवीर्य्या महौषधी मधुरा केशिका शतपत्रिका विश्वस्था वैष्णवी कार्ष्णी वासुदेवप्रियङ्करी दुर्म्मथा तैलवल्ली । प.मु. । वा.सू.१५अ· वरुणादि: "शतावरीगुडूचीभ्याम् ।" गुणाः—हिमा हृद्या मधुरा पित्तघ्नी कफ-वातघ्नी तिक्ता मेहघ्नी रसायनी च । क्षुद्रमहाभेदेन द्विधा । गुणाः—"शतावर्यौ हिमे हृद्ये मधुरे पित्तजित्-परे । कफ वातहरे तिक्ते मेहघ्ने ह्रे रसायने । शतावरीद्वयं हृद्यं मधुरं पित्तजिद्धिमम् । महती कफवातघ्नी तिक्ता श्रेष्ठा रसायने ॥" रा.नि.व.४ । तथा शुक्रवृद्धिकरत्वात् शुक्रला । च.द. ।

**शतावरीमण्डूरम्** । क्ली । परिणामशूले मण्डूरम् । शुद्धमण्डूरं शतावरीरसः दधि दुग्धं प्र· ८ प. घृतं ४ प. एकत्र पचेत् । पिण्डेऽवतारयेत् । শোধিতমণ্ডুর, শতমূলীর রস, দধি, দুগ্ধ প্রত্যেকে ৮ প. ঘৃত ৪ প. পাক করিবে । बृहत् यथा—त्रिफलाक्वाथशुद्ध·मण्डूरम् ८ प· । पाकार्थं—शतावरीरसः दुग्धं दधि आमलकीरसः प्र. ८ प. घृतं ४ प । पाकसिद्धौ मुस्तकपिप्पलीजीरक-धान्यक-हरीतकीत्वक्-तेजपत्रैलानां प्र चूर्णं ४ मा. प्रक्षिप्याद्यीयम् । रस·र· ।

**शताह्वया** । स्त्री । शताह्वायाम् । শুল্‌ফা । शतावर्य्याम् । रा·नि.व·५ । वै·निघ.२भ.सर्व्वज्व.चि. आरग्वधादिनिरूहे । मधुरिकायाम । মৌরী । रा·नि व·२३ ।

**शताह्वा** । स्त्री । सुगन्धक्षुपविशेषे । শুল্‌ফা গাছ । हिं सोफि । मं सोफ् । कं सब्बसिगे । बम्· बड़ी सौफ । च द·अजी·चि·चन्दनबलातैले । गुणाः—कटुः तिक्ता स्निग्धा श्लेष्मातिसारघ्नी ज्वरघ्नी नेत्रव्रणघ्नी वस्तिकर्म्मण्यपि हिता च । रा. नि·व·५ । लघुस्तीक्ष्णा पित्तकृत् दीपनी कटुः उष्णा शूलाक्षिरोगघ्नी च । भा·पू·१भ· । शतमूल्याम् । रा·नि·व·४ । वै·निघ·अर्शः·दि·लघुपञ्चाद्दिष्टते, विजयाचूर्णे । अजमोदायाम् । রাঁধুনী । रा· नि·व·२३ ।

**शताह्वाद्वयम्** । क्ली । शतपुष्पामधुरिकयोः । শুল্‌ফা ও মৌরী । च.सू.३अ. ।

**शताह्वी** । स्त्री । शताह्वायाम् । শুল্‌ফা । रात्रौ । রাত্রি । श र· ।

**शत्वम्** । क्ली । बले । त्रिका· ।

**शत्रिः**(द्रिः) । पुं । गजे । उणा. ।

**शतुकण्टकः** (का) । पुं, स्त्री । घोण्टायाम् । শেয়াকুল । रा·नि·व.८ ।

**शतुद्रुमः** । पुं । अम्लवेतसे । कश्चित् ।

**शतुभङ्गः** । पुं । मुञ्जतृणे । मूँज । वै.निघ· ।

**शतुभूमिजः** । पुं । नीलाञ्जने । वै.निघ· ।

**शदः** । पुं । शाकफलादौ । व्याक· ।

**शनकावलिः** । पु, स्त्री । गजपिप्पल्याम् । श.च· ।

**शनपर्णी** । स्त्री । कटुक्याम् । কট্‌কী । श.च· ।

**शनिप्रियम्** । क्ली । नीलकान्तमणौ । शब्दकल्पः ।

**शनीरुहः** । पुं । महिषे । वै.निघ. ।

**शनैर्मेहः** । पुं । प्रमेहविशेषे । यत्र शनैः सकफं पिच्छिलं मेहति । सु·नि·६अ· । त्रि (ही) । शनैर्मेहनशीले ।

**शसः** । पुं । वधविशेषे । উলু । श.च. ।

**शष्फः** । पुं । नखीनामगन्धद्रव्ये । नखी रा.नि. व.१२ । क्ली । पशुखुरे । পশুর খুর । तरुमूले । গাছের শিকড় । मे. ।

**शफरः** । पुं । मत्स्यविशेषे : পুঁটী মাছ । अम. ।

**शफराधिपः** । पुं । इल्लीशमत्स्ये । त्रि.का. ।

**शफरी** । स्त्री । अस्रनीपिकायाम् । আমরুল-শাক । भा.पू.१म.शा.व. । प्रोष्ठीमत्स्ये । পুঁটী মাছ । अम. । गुणाः—"श्लेष्मकरी तु शफरी ।" अत्रि.२२अ. ।

**शबलः** । पुं । चित्रकवृक्षे । চিতা গাছ । सुगन्ध-वर्षे । गन्धतृण । मूषिकभेदे । ইন্দুরবিশেষ । सा.उ.३८अ. ।

**शब्दः** । पुं । वर्णसमाम्नाये । यथा—"शब्दोनाम वर्णसमाम्नायः । स दृष्टार्थश्चादृष्टार्थश्च सत्यश्चानृतश्चेति । तत्र दृष्टार्थः त्रिभिर्हेतुभिः दोषाः प्रकुप्यन्ति षड्भिरुपक्रमैश्च प्रशाम्यन्ति श्रोत्रादिसद्भावे शब्दादिग्रहणमित्यदृष्टार्थः पुनरस्ति प्रेत्यभावोऽस्ति मोक्ष इति । सत्याः नाम सत्यायुर्वेदोपदेशाः । सन्त्युपायाः साध्यानां सन्त्यारम्भफलानीति सत्य-विपर्ययाच्चानृतः ।" च.वि.८अ. ।

**शब्दग्रहः** । पुं । कर्णे । अम. ।

**शब्दभेदी** (इन्) । पुं । मलद्वारे । शब्दकल्प: ।

**शब्दमालः** । पुं । रम्भवंशे । वै.निघ. ।

**शब्दरोचनम्** । क्ली । लवणे । वै.निघ. ।

**शब्दाढ्यम्** । क्ली । श्वेतकाञ्चधातौ । ভাল রাঙ্গা । वै.निघ. ।

**शब्दाधिष्ठानम्** । क्ली । श्रवणेन्द्रिये । त्रिका. ।

**शमः** । पुं । इस्ते । मनःस्थैर्य्ये । अम.टी. । उपचारे । रा नि.व.२० ।

**शमठः** । पुं । शाकविशेषे । तृणभेदे । তৃণ-বিশেষ । वै.निघ. ।

**शमनः** । त्रि । समीद्धत विषमदोषाणां समता-पादके । वा.चि.१अ. । अरुण. । क्ली । अन्ने । वै. निघ. । "पित्तादिजिन्निरामस्य यत् स्यात्तत् शमनं मतम् ।" चर्व्वणे । धरणिः । हिंसायाम् । हे.च. । पु । मृगभेदे । श.च. । कलाये । মটর । रा.नि. व.१६ । तन्नामकनिरूहवस्तौ । "प्रियङ्गुमधुकं मुस्ता तथैव च रसाञ्जनम् । सक्षीरः शस्यते वस्तिर्दोषाणां शमनः स्मृतः ॥" धूमपानभेदे । अत्र रोगिणश्चत्वारिंशाङ्गुला तथैलादिकश्च प्रायम् । भा. । स्त्री (नी) । रात्रौ । कषाये, येन वमनादि विनैव वातादयः शान्तिं यान्ति । च.द.ज्व.चि. ।

**शमलम्** । क्ली । विष्ठायाम् । अम. ।

**शमिः** । स्त्री । शिम्ब्याम् । ছিনড়া । हे.च. ।

**शमिका** । स्त्री । महाशमीवृक्षे । वै निघ. ।

**शमि(मी)जः (जा)** । पुं, स्त्री । रक्तकुलत्थके । (जा) शिम्बीधान्ये । भा.पू.१भ.धा.वा. ।

**शमि(मी)रः** । पुं । क्षुद्रशमीवृक्षे । ক্ষুদ্র শাঁই গাছ । श.र. । अम. ।

**शमिला** । स्त्री । जातीपुष्पवृक्षे । চামেলী । वै.निघ. ।

**शमी** । स्त्री । (Prosopis spicigera.) स्वनामख्यातसकण्टकवृक्षे । শাঁই গাছ । हिं छिकुर । मं शमी, खेरी । कं बन्नि, कावन्नि । उत. शमी । तत्पर्य्यायाः,—शक्तुफला शक्तुफलिका शक्तुफली सक्तुफला सक्तुफली शिवा काननारिः शान्ता तुङ्गा कचरिपुफला केशमथनी ईशानी लक्ष्मीः तपनतनया इष्टा शुभकरी हविर्गन्धा मेध्या दुरितदमनी समुद्रा वह्निगर्भा समीरः ईशानः मङ्गल्या सुरभिः पापशमनी भद्रा शङ्करी केशहन्त्री शिवाफला सुपत्रा सुखदा । सा द्विधा लघुमहाभेदेन । गुणाः—रूक्षा कषाया रक्तपित्तातिसारघ्नी च । अपिच,—"शमी तिक्ता कटुः शीता कषाया रेचनी लघुः । कम्पकासश्रमश्वास-कुष्ठार्शःक्रिमिजित् स्मृता ॥" भा. । तत्फलं स्वादु रूक्षम् उष्णं केशघ्नञ्च । रा.नि.व.८ । "शमीफलं गुरु स्वादु रूक्षोष्णं केशनाशनम् ।" सु.सू.४६अ. । रक्तपलाशशमीवृक्षे । सु.चि.१अ. । See अग्निगर्भा । शिम्बायाम् । শিম্ । अम. । सोमराज्याम । সোমরাজ । मे. ।

**शमीधान्यम्** । क्ली । शिम्बीधान्ये, माषादौ, मुद्गराजमाषतिलकुलत्थादौ च । पुरातनादिगुणाः —"शूकधान्यं शमीधान्यं समातीतं प्रशस्यते । पुरातं प्रायशो रूक्षं प्रायेणाभिनवं गुरु । यवगोधूम-माषाश्च तिलाश्चापि नवा हिताः । पुराणा विरसा रूक्षा न तथार्थकरा मताः । अनार्त्तवं व्याधिहत-मपर्य्यागतमेव च । अभूमिजं नवञ्चापि न धान्यं गुणवत् स्मृतम् ॥" राज.१प. ।

**शमीपत्रा।** स्त्री। लज्जालुकाललतायाम्। लज्जावती। रा.नि.व.५।

**शमीरकन्दः।** पुं। वाराहीकन्दे। शुयार आलू। कोषान्तरम्।

**शम्यदा।** स्त्री। हड्डी। वृद्धि ओषधि। वै.निघ.।

**शम्पाकः।** पुं। महारग्वधवृक्षे। बड़ शोणालू, सोन्दाल। अम.। मरिचाद्यतैले। रत्नमालासंग्रहे पित्तशोथचि.; विन्दुघृते च। तन्मज्जगुणाः— "स्वादुपाकोऽग्निवर्द्धकन् स्निग्धः पित्तानिलापहः।" सु.सू.४६अ.। यावके। सम्यक्पाके। हे.।

**शम्पातः।** पुं। आरग्वधवृक्षे। शोणालु वा सोन्दाल गाछ। श.र.।

**शम्ब(व)रः (लः)।** पुं। लोध्रवृक्षे। लोध गाछ। अर्ज्जुनवृक्षे। रा.नि.व.६। चित्रकवृक्षे। चिता गाछ। रा.नि.व.६। तालवृक्षे। रा.नि.व.२३। दन्ते। उणा.। मृगविशेषे। शम्बर मृग। त्रिका.। मत्स्यभेदे। विश्व.। क्ली। जले। त्रिका.।

**शम्ब(व)रकन्दः।** पुं। वाराहीकन्दे। शुयार आलू। रा.नि.व.७।

**शम्ब(व)रचन्दनम्।** क्ली। वर्वर-चन्दने। शम्बर चन्दन। तत्पर्य्यायाः,—कैरातं कैरातकं वल्लगन्धं शैलगन्धं चन्दनं गन्धकाष्ठं। गुणाः— तिक्तं शीतलं उष्णं श्लेष्मवातहरं श्रमःपित्तविस्फोट- पामादिकुष्ठव्रणतापहरञ्च। रा.नि.व.१२।

**शम्ब(व)रदेशजः।** पुं। शुक्लरोध्रे। श्वेत लोध। वै.निघ.।

**शम्ब(व)रपादपः।** पुं। शुक्लरोध्रे। वै.निघ.।

**शम्ब(व)राहारः।** पुं। वनवदरे। बुनो- कुल। वै.निघ.।

**शम्ब(व)री।** स्त्री। आखुकर्णीलतायाम्। मूषाकाणी। रा.नि.व.२३। मुसली?। रा.नि. व.४। द्रवन्तीभेदे। बड़ दन्ती वा ग्वग्रवन्ना। रा.नि.व.५।

**शम्ब(व)रोगन्धा।** स्त्री। वनतुलस्याम्। वै. निघ.।

**शम्ब(व)रोद्भवः।** पुं। शुक्ललोध्रे। वा.उ. ३२अ.।

**शम्बुः।** पुं। शम्बूके। शामुक। हड्डचन्द्रः।

**शम्बु(म्बू)कः।** पुं। शम्बूके। शामुक। तत्पर्य्यायाः,—जलडिम्बः शाम्बुकः शाम्बुकः दुर्वरः पङ्कमण्डूकः। See शङ्खः। प्राणनाशककीट- विशेषे। सु.कल्प,८अ.। शङ्खे। शाँक्। हे.च.। क्षुद्रशङ्खे। छोट शाँक। रा.नि.व.१९।

**शम्बुकः।** पुं। शम्बूके। शामुक। श.र.।

**शम्बूकपुष्पी।** स्त्री। शङ्खपुष्प्याम्। भा.पू.१ भ. चित्तभ्रम-चि.। "शम्बूकपुष्प्य शताः।"

**शम्बूका।** स्त्री। जलशुक्ती। झिनुक। शम्बूके। शामुक। रा.नि.व.१९।

**शम्बूकाद्यतैलम्।** क्ली। कर्णरोगे तैलम्। पाठः—"शम्बूकमांसकल्केन कटुतैलं विपाचयेत्। अस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति॥" द्वितीयं वृहत् यथा—"अस्य शम्बूकमांसस्य कटुतैलञ्च तत्समम्। कुष्ठं भृङ्गी रजो वाषा त्वर्कपत्रं सुण्ठी घर्मं। विल्वं शाल्मलिपत्रञ्च केशरं नाग- केसरम्। द्राक्षा चातिविषा चैव यष्टीमधुकमेव च। शटी चैरण्डकार्पासभृङ्गकेशरजम्य च। एतेषां कर्षमादाय पचेत्तैलं भिषग्वरः। तस्य पूरण- मात्रेण कर्णनाड़ी प्रशाम्यति॥" रस.र.।

**शम्बूकावर्त्तः।** पु। सन्निपातजभगन्दररोगे। तस्य लक्षणं यथा—"बहुवर्णरुजास्रावा पिड़का गोस्तनोपमा। शम्बूकावर्त्तवन्नाड़ी शम्बूकावर्त्तको मतः॥" मा.नि.।

**शम्भुः।** पुं। श्वेतार्के। शादा आकन्द। श.च.। रस.चि.३अ.। "वह्निरेकः शम्भुरेकः।"

**शम्भुकेतनः।** पुं। पीतलोध्रे। वै.निघ.।

**शम्भुतेजः।** क्ली। पारदे। र.सा.सं.।

**शम्भुप्रिया।** स्त्री। आमलक्याम्। श.र.।

**शम्भुवीजम्।** क्ली। पारदे। भैष.ज्वलभङ्गचि.।

**शम्भुवल्लभम्।** क्ली। श्वेतकमले। रा.नि.व.१०।

**शम्भोःकण्ठविभूषणम्।** क्ली। विषे। काठ विष। भैष.पञ्चाननरसे. [निद्रायाम्। विश्वः।

**शयः।** पुं। हस्ते। रा.नि.व.१८। सर्पे। मे.।

**शयथः।** पुं। सर्पविशेषे। वराहे। मीने। मृत्यौ। उणा.। त्रि। गाढ़निद्रिते। हे.च.।

**शयनम्।** क्ली। निद्रायाम्। घुम। शय्यायाम्। विछाना। अम.। मैथुने। मे.।

**शयानकः।** पु। कृकलासे। गिरगिटी। हे. च.। सर्पे। उणा.।

**शयामूत्रम्।** क्ली। शय्यामूत्रे। वै.निघ.।

**शयालुः।** पुं। कुक्कुरे। त्रिका.। शृगाले। त्रि। अलसे।

**शयितः।** पुं। अजगरे। शेलो। चालता। श.मा.। त्रि। निद्रिते। अम.।

**शयुः।** पुं। अजगरनामसर्पजातौ। अम.।

**शय्या।** स्त्री। आस्तरणे, तल्पे। विछाना। अम.। सुखशय्यागुणाः—"सुखशय्यासनं सेव्यं निद्रा-पुष्टिधृतिप्रदं। श्रमानिलहरं वृष्यं विपरीत मतोऽन्यथा॥" भूशय्यागुणाः—"भूशय्याऽनिल-पित्तघ्नी बृंहणी शुक्रवर्द्धनी।" खट्वादिशय्ययोर्गुणाः—"खट्वा तु वातला प्रोक्ता पटीरस्याऽतिवातलः।" राज.भ्रूप.।

**शय्यामूत्रम्।** क्ली। शिशोस्तन्नामकरोगे। शेजेमोता। औषधं यथा—"कृतमूत्रार्त्ति-भूभागस्थं दग्ध्वा तु खोलके। संचूर्ण्य मधुमर्दिथ्या लीढ्वा स्वप्ने न मूत्रयेत्॥" रस.र.बाल.चि.।

**शरम्।** क्ली। जले। मे.।

**शरः।** पुं, क्ली। ( Saccharum sara. ) Penreed grass. स्वनामख्याततृणं। शर गाछ। हिं काड़ा, रामशर, शरपत्। तैं रेल्लु, कासिवेदुरु, गुन्द्र। शरण, पंचलिमगणे इति मालवे प्रसिद्धः। पञ्जा. कंड़। तत्पर्य्यायाः,—इषुः काण्डः बाणः मुञ्जः तेजनः तेजनकः गुन्द्रकः चित्रपुङ्खः उत्काटः शायकः क्षुरः इषुमः क्षुरिका पत्रः विशिखः। स द्विविधः स्थूलसूक्ष्मभेदेन। तद्द्विविधगुणाः—मधुरं तिक्तम् इषदुष्णं बलवीर्य्य करं नित्यसेवनात् ईषद्वातकरं कफभ्रान्तिमदघ्नं च। अपिच,—"भद्रमुञ्जः शरोवाणस्तेजनश्चेक्षुवेष्टनः। मुञ्जो मुञ्जातकोवाणः स्थूलदर्भः सुमेखलः॥ मुञ्जा-द्वयन्तु मधुरं तुवरं शिशिरं तथा। दाह-तृष्णा-विसर्पास्र-मूत्रवस्त्यक्षिरोगजित्॥ दोषत्रयहरं वृष्यं मेखलासूपयुज्यते॥" भा.। काशभेदे। रा.नि. व.८। बाणे। अम.। स द्विविधः कर्णी शल्यश्च। सु.सू.२६अ.। दध्नः अग्रभागे। दधिर साधा। मे.। मद्यपिण्डोत्तरी। रा.नि.व.९।

**शरखड्गकः।** पुं। खागड़वर्णे। धागड़ा। प.मु.।

**शरजम्।** क्ली। नवनीते। ननि। शब्दकल्प.। हैयङ्गवीनघृते। हे च.।

**शरटः।** पुं। कृकलासे। कुसुम गाछेर पाता। र.मा.। पृतोकरसे। नाटा। प.मु.। कृकलासे। च.टी.। स्त्री (टी)। खदिरपर्णीम्। लज्जावती। रे.निघ. औषध.चि.।

**शरणा (णी)।** स्त्री। प्रसारण्याम्। गन्धभाद्-लियां। मद.व.२.। श.र.। जयन्त्याम्। जयन्ती गाछ। श.र.।

**शरण्डः।** पुं। पक्षिणि। श.र.। गृहगोधा-याम्। टिकटिकि। कृकलासे। काकलास। मे.।

**शरत् (द) (दा)।** स्त्री। वत्सरे। ऋतुभेदे। शरत्काल। अम.। श.र.। तुलावृश्चिकौ शरत्। "तुलावृश्चिकयोः शरत्।" मतान्तरे भाद्राश्विनौ। तत्पर्य्यायाः,—शरदा घनात्ययः कालप्रभातः वर्षा वसानः मेघान्तः प्रावृडत्ययः। गुणाः—"शरदुष्णा पित्तकर्त्री गुणा मध्यबलावहा।" भा.। वक-पुष्पवृक्षे। सप्तपर्णवृक्षे। हंसे। वृषे। सर्पे। पद्म पुष्पे। वत्सरे।

**शरत्कामी (इन्)।** पुं। कुक्कुरे। श.र.।

**शरत्पद्मम्।** क्ली। श्वेतकमले। रा.नि.व.१०।

**शरत्पुष्पः।** पुं। आगुल्यपुष्पे। रा.नि.व.४।

**शरदन्तः।** पुं। शरे। हेमन्तकाले। रा.नि.व. २१। See हेमन्तः।

**शरदा।** स्त्री। वत्सरे। शरत्काले। [भागवतम्।

**शरदुदाशयम्।** क्ली। शरत्कालिकसरोवरे।

**शरदुद्भवः।** पुं। हरितवर्णशाकविशेषे। नटे शाक। र.मा.सं.।

**शरपुङ्खः (ङ्खा)।** पुं, स्त्री। ( Tephrosia purpurea. ) स्वनामख्यातक्षुपविशेषे। शरपुङ्खेति लोके। वननील, शरपुङ्खा। हिं शरफोंका। बम्. दा. उन्हालिकुलथि। कं येरडुकोगि। म उहालि.। तैं तेल्लवेंपलिचेट्टु। ता. कोल्लुक्कयवेल्लयि। तत्पर्य्यायाः,—काण्डपुङ्खा बाणपुङ्खा इषुपुङ्खा इषु-पुङ्खिका सायकः। सा श्वेतपीतभेदेन द्विधा। गुणाः,—कटुरुष्णा कृमिवातघ्नी। श्वेतशरपुङ्खा तु गुणाढ्या रसायने प्रशस्ता च। रा.नि.व.४। "शर-पुङ्खो यकृत्प्लीहगुल्मव्रणविषापहः। तिक्तः कषायः कासासश्वासज्वरहरो लघुः।" भा.। तद्वीजं मूषिकविषहरम्। सा.उ.३८अ.। विशेषेण प्रमेहघ्नः रक्तशुद्धिकरश्च। अर्वाचीनाः।

**शरवीजम्।** क्ली। शरधान्ये। शरेर वीचि। व.निघ.

**शरभः** । पुं । महासिंहे । रा.नि.व.१९ । काश्मीर-देशीय-हरिणविशेषे । स उष्ट्रो विशालशृङ्गश्च । एतन्मांसं कषाय-मधुरादिगुणयुक्तम् । शलभे । फड़िङ्ग । उष्ट्रे । जटा. । करिशावके । वानर-भेदे । मे. ।

**शरभूमिजः** । पुं । गन्धके ।

**शरमल्लः** । पुं । शारिकाभेदे, मयनभेदे । গো-শালিক । श.च. ।

**शरलः** । पुं । सरलवृक्षे । সরল গাছ । शब्द-कल्पः ।

**शरलपृष्ठकः** । पुं । पर्व्वतमृगे ।

**शरलकम्** । क्ली । जले । श.च. ।

**शरला** । स्त्री । सरलकाष्ठे ।

**शरलोमा** । पुं । ऋषिविशेषे ।

**शराटिः (ड़ि) (तिः)** । पुं । आटिनामक-पक्षिणि । শরাল পাখী । श.र. । भ.टी.र.मा. ।

**शराटिका** । स्त्री । शरारिपक्षिणि । শরাল পাখী । खदिरपर्ण्याम् । लज्जावती । वै.निघ. ।

**शरादिपञ्चमूलम्** । क्ली । शरादिपञ्चद्रव्यकृत-कषाये । यथा—"शरेक्षुदर्भकाशानां शालीनां मूलमेव च" च.द.अश्म.चि शरादिघृते ।

**शरादिपञ्चमूलाद्यघृतम्** । क्ली । अश्मर्य्यां घृते । "शरादिपञ्चमूल्या वा कषायेण पचेद्घृतम् । प्रस्थं गोक्षुरकल्केन सिद्धमश्यात् सशर्करम् ॥" च.द.अश्म.चि. ।

**शरारिः(री)** । पुं, स्त्री । स्वनामख्यातबक-जातीयपक्षिणि । শরাল পাখী । तत्पर्य्यायाः,—आटिः आड़िः आड़िका आड़ी शराड़िः शरालिः शरालिका शराली शराटिः शरातिः हापुत्री राज-पुत्रिका । भैष.शिरोरो.चि. । तन्मांसगुणाः—वातघ्नं स्निग्धं सृष्टमलं रुच्यं रक्तपित्तहरं हिमञ्च । राज.३प. ।

**शरारि(री)मुखः** । पुं । शरारिपक्षिणि । শরাল পাখী । सु. । क्ली । धवलस्कन्धशरारि-नाम्नी दीर्घचञ्चुपक्षिणश्च मुखसदृशमुखे विस्रावणास्त्रे । कर्त्तरीति संज्ञा लोके । কাঁচি, কাতারি । "तत्र दशाङ्गुलां कलत्रवाग्रां कुर्य्यात् ।" सु.सू.८अ. ।

**शरालिः (का) (ली)** । स्त्री । शरारिपक्षिणि । শরালপাখী । शर. ।

**शरावः** । पुं । पलाष्टके, ६४ तो., १ श. । "शरावोऽष्टपलम् ।" प.प्र.१ख. । मृण्मयपात्रभेदे । শরা । अम. । तत्पर्य्यायाः,—वर्द्धमानकः मार्त्तिकः सरावः शलाजिरं पार्थिवं मृत्कांस्यम् ।

**शरावकुट्टः** । पुं । वायव्यकीटविशेषे । सु.कल्प. ८अ. ।

**शरावार्द्धम्** । क्ली । अर्द्धशरावपरिमाणे । ⁄॥० আধ সের, ৩২ তোলা । प.प्र. ।

**शराविका** । स्त्री । प्रमेहपीड़काभेदे । लक्षणम् यथा—"शरावमाना तद्रूपा निम्नमध्या शरा-विका ।" सु.नि.६अ ।

**शरितः** । पुं । श्लेष्मान्तकवृक्षे ।

**शरिमा(न्)** । पुं । प्रसवे ।

**शरी** । स्त्री । मेथीतृणे । भा. । शरपुष्पवल्ल्याम् ।

**शरीरम्** । क्ली । देहे । দেহ । तत्पर्य्यायाः,—वर्ष्म तनुः तनूः रोगभूः आत्मा स्कन्धं भूः मूर्त्तिमत् करणं गात्रम् । रा.नि.व.१८ । शीर्य्यते इति शरीरम् । तच्च चेतनाधिष्ठानभूतम् आत्मभोगायतनं पञ्चभूत-विकारात्मकञ्च । च.शा.६अ. । "पञ्चमहाभूत-विकारात्मके आत्मनो भोगायतने ।" च.सू.१अ. । च.द. । "गर्भो यदा हस्तपादादिभिरङ्गैरुपेतस्तदा शरीरमिति संज्ञां लभते । तच्च शरीरं षडङ्गं, शाखाश्चतस्रः, मध्यं पञ्चमं, षष्ठं शिरः" इति । सु.शा.५अ. । इह खलु शरीरमधिकृत्याष्टौ पुरुषा निन्दिता भवन्ति । अतिदीर्घश्चातिह्रस्वश्चातिलोमा चालोमा चातिकृष्णश्चातिगौरश्चातिस्थूलश्चातिकृश-श्चेति । च.सू.२१अ. । तस्मिंश्च शरीरे त्रीणि षष्ट्य-धिकानि शतान्यस्थ्नां सह दन्तोलूखलनखैः । तद् यथा—द्वात्रिंशद्दन्तोलूखलानि, ३२ दन्ताश्च, २० नखाः, २० पाणिपादशलाकाः, ४ शलाकाधि-ष्ठानानि, ६० अङ्गुल्यस्थीनि, २ पार्ष्ण्यस्थिनी, २ कूर्चाधः, २ पाण्योः मणिका, ४ पादयोर्गुल्फाः, ४ अरत्न्योरस्थीनि, ४ जङ्घयोः, २ जानुनोः, २ ऊर्व्वोः, २ बाह्वोः, २ अंसयोः, २ अक्षकौ बाह्वंस-जत्रुसन्धिकीलकौ, २ तालुनि, २ श्रोणिफलके, १ भगास्थि, १ पुंसां मेढ्रास्थि, १ त्रिकास्थि, १ गुदास्थि, ३५ पृष्ठास्थीनि, १५ ग्रीवायां, २ जत्रुस्थिनी, १ हन्वस्थि, २ हनुबन्धनास्थिनी, २ ललाटे, २ गण्डयोः, ३ नासिकायाम्, २४ द्वयोः पार्श्वयोः, २४ पञ्जरास्थीनि, २४ पार्श्वकास्थीनि, २ शङ्खास्थीनि, ४ शिरःकपालास्थीनि, १० वक्षसि

इति। अस्मिंश्च शरीरे—इन्द्रियाधिष्ठानानि त्वगादीनि ५, स्पर्शादीनि बुद्धीन्द्रियाणि ५, हस्तादिकर्मेन्द्रियाणि ५, चेतनाधिष्ठानं हृदयं १, प्राणायतनानि १०, कोष्ठाङ्गानि १५, नाभ्यादीनि जङ्घापिण्डिकादीनि प्रत्यङ्गानि ५६। नव स्नायुशतानि (९००), सप्त शिराशतानि (७००), द्वे धमनीशते (२००), पञ्च पेशीशतानि (५००) मर्मस्थानानि १०७, सन्धिस्थानानि च २००। अस्मिन् शरीरे आहारपरिणामजरसपरिमाणं ९ अञ्जलयः, रक्तस्य ८ अञ्जलयः, पुरीषस्य ७ अञ्जलयः, श्लेष्मणः ६ अञ्जलयः, पित्तस्य ५ अञ्जलयः, मूत्रस्य ४ अं॰, वसायाः ३ अं॰, मेदसः २ अं॰, मज्जायाः १ अं॰, मस्तिष्कस्य शुक्रस्य श्लेष्मौजसोश्च ॥० अं॰। च. शा.७अ.।

**शरीरजः।** पुं। रोगे। व्याधिः। त्रि। देहजे।

**शरीर(परि)मार्ज्जनम्।** क्ली। देहमार्ज्जने। गात्रमार्ज्जन। गुणाः—"दौर्गन्ध्यं गौरवं कण्डूं कच्छूं मलमरोचकं। स्वेदबीभत्सतां हन्ति शरीरपरिमार्ज्जनम्॥" राज.२प.। [६प.।

**शरीरविचयः।** पुं। शरीरविज्ञाने। च.शा.।

**शरीरसंस्कारः।** पुं। देहस्य पवित्रीकरणे।

**शरीरावरणम्।** क्ली। त्वचि। चामड़ा। रा.नि.व.१८।

**शरीरास्थि।** क्ली। कङ्काले। अस्थिपञ्जर। रा.नि.व.१८।

**शरीरी** (इन्)। पुं। जीवे। जटा.। तद्यथा—"गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकम्। प्रकृतिः सविकारा च तत्सर्व्वं गर्भसंज्ञकं। कालेन वर्द्धितो गर्भो यदङ्गोपाङ्गसंयुतः। भवेत् तदा स मुनिभिः शरीरीति निगद्यते॥"

**शरेष्टः।** पुं। आम्रवृक्षे। जटा.।

**शरोटिका।** स्त्री। लज्जालुकायाम्। लज्जावती। वै.निघ.।

**शरीरोपस्तम्भः।** पुं। शरीरधारकस्तम्भे। स त्रिविधः आहारस्वप्नब्रह्मचर्य्यभेदेन। स्तभ्यमानं धार्य्यमाणम् उप समीपं गत्वा स्तम्भयति धारयतीति उपस्तम्भः धारकः। च.सू.११अ.।

**शर्करकः।** पुं। मधुरजम्बीरे। शरबतीनेबु। रा.नि.व.११।

**शर्करकन्दः।** पुं। (Ipomoca batatas.) आलुकविशेषे। राँगाआलु, शकरकन्द आलु। हिं शकरकन्द। ता. वुल्लिकिजङ्गु। Watts.

**शर्करजा।** स्त्री। मधुशर्करायाम्। मधुर चिनि। रा.नि.व.१४।

**शर्कराक्षः।** पुं। ऋषिविशेषे। च.।

**शर्करा।** स्त्री। खण्डविकारे। चिनि। सा. गुणाः—मधुरा शीता दाहपित्तश्रमघ्नी रक्तदोषघ्नी भ्रमिघ्नी कफघ्नी च। रा.नि.व.१४। 'सिता सुमधुरा रुच्या वृष्या शुक्रविवर्द्धनी। तत्पायिनीगुणाः—"पित्तघ्नी मधुरा पथ्या शर्करापायिनी नृणाम्॥" शर्करान्या सुशीता च काचशूलसमुद्भवा। हिता पित्तास्रजि शोषे मूर्च्छाश्रमगदापहा॥" अत्रि.१०अ.। "शर्करा ज्वरपित्तासृङ्मूर्च्छाच्छर्द्दितृषापहा॥" राज.। 'सिता सुमधुरा रुच्या वातपित्तास्रदाहजित्। मूर्च्छाच्छर्द्दिज्वरान् हन्ति सुशीता शुक्रकारिणी॥" भा.। सा च खण्डीपलाश्वेतोपलापुण्ड्रागौड़ीमत्स्यखण्डपौण्ड्रकवंशिकपुष्पामिक्षुरक्षीदुरसालेक्षुजपुष्पोद्भवमधुक्षयवासशर्करा-भेदेन बहुधा। आसां विशेषाः पर्य्याये ज्ञेयाः। मद्यविशेषे शर्करासवे। गुणाः—"हरति मलमियं या दीपनी पाण्डुमेहान् लघुमधुरसुशीता रोचनी पित्तहन्त्री। जरयति सकलं वा पीतमन्नाविभावं श्वसनरुधिरकासान् हन्ति वा कामलाञ्च।" अत्रि.१९अ.। त्रि। त्रिष। र.सा.सं. शीतारिरसे। वालुकायाम्। बालि। भा.म.४भ. क्षुद्ररो.चि. कदरलक्षणे। "शर्करोन्मथिते पादे।" दन्तरोगभेदे, दन्तशर्करायाम्। तल्लक्षणं यथा—"शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै। सा दन्तानां गुणघ्नी तु विज्ञेया दन्तशर्करा॥" सु.नि.१६अ.। स्वनामकवस्तिरोगे, अश्मरीशर्करायाम्। लक्षणं—"अश्मर्य्याः शर्करा ज्ञेया तुल्यव्यञ्जनवेदना। पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः। सा भिन्नमूर्त्तिर्वातेन शर्करेत्यभिधीयते।" सु.नि.३अ.।

**शर्करार्बुदम्।** क्ली, पुं। क्षुद्ररोगविशेषे। लक्षणम्—"प्राप्य मांससिरास्नायुश्लेष्मा मेदस्तथानिलः। ग्रन्थिं कुर्व्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम्। सवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः। मांसं विशोष्य ग्रथितां शर्करां जनयेत् पुनः। दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः शिराः। स्रवन्ति सहसा रक्तं तद्विद्याच्छर्करार्बुदम्॥" सु.नि.१३अ.। वा.उ.३१अ.।

**शर्क्करालेहः**। पुं। रसायनाधिकारे लेहः। यथा—मेदा महामेदा ऋद्धिः वृद्धिः जीवकः ऋषभकः काकोली क्षीरकाकोली जीवन्ती यष्टिमधु एषाम् प्रति ४ तो॰ ५ माषा॰ ५ र॰। कुशमूलं काशमूलम् उलुमूलं शरमूलं इक्षुमूलम् एषाम् प्रति ३प॰ जलं ३२ श॰ शे॰ ८ श॰। नारिकेलजलं १२ श॰ घृतं ४ प॰। शर्क्करा १६ प॰। सिद्धे शीते प्रक्षेपार्थं एला तेजपत्रं धान्यकं जीरकं गुड़त्वक् कृष्णजीरकं वंशलोचना नागकेशरम् एषां प्रति चूर्णं १ तो॰। रस.र.।

**शर्क्करासवः**। पुं। शर्क्करोत्थासवे। गुणाः— "सुखप्रियः सुखमदः सुगन्धिर्बस्तिरोगनुत्। जरणीयः परिणतो हृद्यो वर्ण्यश्च शार्क्करः॥" च.सू. २७अ.।

**शर्क्करासुरभिः**। पुं। शर्क्करासवे। वै.निघ.।

**शर्क्करोदकम्**। क्ली। सिताजले। চিনির পানা, শরবৎ। यथा—एलालवङ्गमरिचकर्पूरयुतशीतलजलमिलिता शर्क्करा शर्क्करोदकमुच्यते। गुणाः—शुक्रलं सरं शीतलं बल्यं रुच्यं लघु स्वादु वातपित्तहरणाग्नं रक्तदोषहरं वमिमूर्च्छाज्वरदाहघ्नञ्च। भा॰।

**शर्द्धः (नम्)**। पुं, क्ली। महत्कारे। अपानवायौ। व्याकरणम्।

**शर्द्धञ्जहः**। पुं। शिम्ब्यादौ, माषे। व्याक॰। ति। मलद्वारेण वायुत्यागिनि।

**शर्म्मणी**। स्त्री। ब्राह्मीक्षुपे। वै.निघ.।

**शर्म्मरा**। स्त्री। दारुहरिद्रायाम्। धरणिः।

**शर्म्माख्यः**। पुं। मयूरे। भूशिरि। प.मु.।

**शर्व्वरी**। स्त्री रात्रौ। अम.। नार्य्यां। मे.। सन्ध्यायाम्। उणा॰। हरिद्रायाम्। रा.नि.व.६। भा॰ तन्द्रिज्वर.चि.। "कृमिहरनागरशर्व्वरी।" दार्व्यङ्कुलपाज्वर.चि.। "कलिङ्गविहाननशर्व्वरीभिः।"

**शर्व्वरीद्वयम्**। क्ली। हरिद्रा दारुहरिद्रयोः। भैष.क्षुद्ररो.चि.।

**शर्व्वाच्चम्**। क्ली। रुद्राक्षे। रा.नि.व.११।

**शर्षपः**। पुं। सर्षपे। সরিষা। See सर्षपः।

**शलः**। पुं, क्ली। तालवृक्षे। वै.निघ.। उष्ट्रे। उ॰च॰। शल्लकीकण्टके। শজারুর কাঁটা। अम॰।

**शलकः**। पुं। तालवृक्षे। शल्लकीकण्टके। वै. निघ॰। मर्कटके। মাকড়শা। त्रिका॰।

**शलङ्गः**। पुं। लवणविशेषे। उणा.।

**शलभः**। पुं। पतङ्गे। ফড়িঙ্গ, পঙ্গপোকা।

**शलभोलिः**। पुं। उष्ट्रे। हे॰च॰।

**शलली**। स्त्री। शल्लकीकण्टके। শজারুর কাঁটা। अम.।

**शलाका**। स्त्री। मदनवृक्षे। ময়না গাছ। शरे। শর। शारिकायाम्। শালিক পাখী। शल्यकाम्। সজারু। मे.। नलकास्थनि। নলাড় হাড়। श॰च॰। नेत्राञ्जनसाधनकाष्ठिकायाम्। অঞ্জনের শলা। यथा—"दशाङ्गुला तनुर्मध्या शलाका मुकुलानना। अश्मजा धातुजा वापि कलायपरिमण्डला। ताम्रलौहाश्मसञ्जाता शलाका लेखने मता। सुवर्णरजतोद्भूता शलाका लेहने मता।" तोड़.ह्ड.पृ.।

**शलाकाधिष्ठानास्थि**। स्त्री। पाणिपादयोः शलाकाख्याधारभूतं अस्थनि। নলকাস্থিসমূহের আধারাস্থি। तानि ४। च.शा.७अ.।

**शलाकायन्त्रम्**। क्ली। तदाकाराष्टाविंशति-विधयन्त्रेषु। तानि नानाप्रकाराणि, नाना प्रयोजनानि यथायोगपरिणाहदीर्घाणि च। यथा—गण्डूपदमुख शरपुङ्खमुख सर्पफणमुखं बड़िशमुखञ्चेति द्वे द्वे एषणव्यूहनचालनाहरणार्थम्। मसूरदलमात्रमुखे द्वे किञ्चिदानताग्रे स्रोतोगतशल्योद्धरणार्थम्। त्रीणि दर्व्वाकृतीनि खल्लमुखानि क्षारौषधप्रणिधानार्थम्। त्रीणि जाम्बववदनानि, त्रीण्यङ्कुशवदनानि अग्निकर्म्मार्थानि। षट् कार्पासकृतोष्णीषाणि प्रमार्ज्जनक्रियासु। एकं कोलास्थिदलमात्रमुखं सूक्ष्मतीक्ष्णोष्णं नासार्शुदहरणार्थम्। एकमञ्जनार्थं कलायपरिमण्डलम् उभयतो मुकुलाग्रम्। मूत्रमार्गविशोधनार्थमेकं मालतीपुष्पवृन्ताग्रप्रमाणपरिमण्डलमिति। सु.सू.७अ.।

**शलाकास्थि**। क्ली। नलकास्थनि। নলার হাড়। तानि ४। च.शा.७अ.।

**शलाटः**। पुं। शकटपरिमाणे, द्विसहस्रपले। २००० পল। तुला पलशतं तासां विंशत्या भार आचितः। शकटः शाकटीनश्च शलाटस्तो दशाचितः॥" शे.च.।

**शलाटुः**। पुं। बिल्ववृक्षे। रा.नि.व.२३। कोमलफले। ফলের গুঁটো। अम.। सु.सू.उ.३अ.।

**शलालु**। क्ली। सुगन्धद्रव्यविशेषे। व्याक॰।

**शल्ली** । स्त्री । क्षुद्रशल्लकीमृगे । तन्मांसं गुरु स्निग्धं शीतलं कफपित्तघ्न । रा नि.व.१७ ।

**शल्कम्** । क्ली । खण्डे । अम. । मत्स्यत्वचि । माछेर आँइस । कोषान्तरम् । वल्कले । अम. ।

**शल्कलम्** । क्ली । मत्स्यशल्के । माछेर आँइस । तरुवल्कले । गाछेर छाल । व्याक. ।

**शल्कली (लिन्)** । पुं । मत्स्ये । श.र. ।

**शल्यदा**
**शल्यपर्णिका** } स्त्री । मेदायाम् ।

**शल्मलिः (ली)** । पुं । शाल्मलिवृक्षे । शिमुल गाछ । (लिकः) । रक्तरोहितकवृक्षे । लाल दयना गाछ । रा.नि.व.८ ।

**शल्मलिकः** । पुं । रक्तरोहितके ।

**शल्यः** । पुं, क्ली । सर्व्वशरीरदुःखोत्पादकभावमात्रे, विभिन्नकीटकण्टकादौ ।" "तत्शल्यमिति नानीयाल्लोष्टकण्टकविभिन्नकम् ।" वै.सं.२अ. । शारीरागन्तुभेदेन शल्यं द्विविधं । यत् सर्व्वशरीराबाधकरं शल्यं तदिहोपदिश्यत इत्यतः शल्यशास्त्रम् । ततः शारीरं नखरोमादिधातवोऽन्नमलादोषाय दुष्टाः । आगन्तु शारीरशल्यव्यतिरेकेण यावन्तो भावा दुःखमुत्पादयन्तीति ते वाच्याः ज्ञेया । सु.सू.२६अ. । विद्धशल्यमपि द्विविधमवबद्धमनवबद्धञ्चेति । अवबद्धशल्योद्धरणार्थं पञ्चदश हेतवो भवन्ति । यथा—स्वभाव-पाचनभेदनदारणपीडन प्रमार्ज्जन-निर्ध्मापन-वमन विरेचन प्रक्षालन-प्रतिमर्ष-प्रवाहणाचूषणायस्कान्तहर्षा इति । सु.सू. २७ अ. । अस्त्रे । वंश कन्तिकायाम् । विश्वः । वाणे । मे. ।

**शल्यः (कः)** । पुं । वृहत्कीटाकारे तन्नामकमृगविशेषे । सजारु । तत्पर्य्यायाः,—श्वावित् शलाका शल्यः क्रकचपादः छेदारः शल्यमृगः वज्रशल्यः विलेशयः । तन्मांसगुणाः—गुरु स्निग्धं दीपनं श्वास-कासघ्नञ्च । रा.नि.व.१७ । स्वादु पित्तघ्नं लघु शीतं विषघ्नञ्च । सु.सू.४६ अ. । मदनवृक्षे । मयना गाछ । अम. । श्वेतखदिरे । वै.निघ. । मत्स्यभेदे । शोलमाछ । रा.नि.व.१९ । पीतलोध्रे । वै.निघ. । विल्ववृक्षे । रा.नि.व.११ । रक्तखदिरे । च.द.मेह.चि. । "विडङ्गदार्व्वीधवशल्यकानां ।" शलाकायाम् । हे.च. ।

**शल्यकण्ठः** । पुं । शल्लकीमृगे । सजारु । श.च. ।

**शल्यकोटर्य्यः** । पुं । मदनवृक्षे । मयना गाछ । रा.नि.व.८ ।

**शल्यचिकित्सा** । स्त्री । अस्त्रचिकित्सायाम् ।

**शल्यतन्त्रम्** । क्ली । सौश्रुताष्टविधतन्त्रान्यतमे तन्त्रे । यथा—शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थि-बाल-नख-पूयास्रावान्तर्गर्भशल्योद्धारार्थं यन्त्र-शस्त्र-क्षाराग्निप्रणिधान-व्रणविनिश्चयार्थञ्च । सु.सू.१अ. ।

**शल्यदा** । स्त्री । मेदायाम् । अभावे अश्वगन्धा । रा.नि व.५ ।

**शल्यपर्णिका (र्णी)** । स्त्री । मेदायाम् । रा. नि.व.५ ।

**शल्यमृगः** । पुं । शल्लकीमृगे । सजारु ।

**शल्यलोम (न्)** । क्ली । शल्लकीरोमणि । सजारुकाँटा । रा.नि.व.१९ ।

**शल्या** । स्त्री । मेदायाम् । रा.नि.व.५ । विकङ्कतवृक्षे । नागवल्लीलतायाम् । वै.निघ. ।

**शल्योद्धरणम्** । क्ली । विद्धशल्योत्पाटने । वं सं.२अ. ।

**शल्लम्** । क्ली । वृक्षवल्कले । छाल । त्वचि । चामड़ा । श.र. ।

**शल्लः** । पुं । भेके । श.र. ।

**शल्लकः** । पुं । शालतरुविशेषे । शल्लकी वृक्ष । शटा. । शल्लकीमृगे । सजारु । हिं साहिल । गुणाः—"शल्लको हृदयो बल्यः स्निग्धो वृष्यो रुचिप्रदः । वातघ्नः अदरो पथ्यो मधुरो धातुवर्द्धनः ॥" अत्रि.२०अ. । क्ली । तरुवल्कले । श.र. ।

**शल्लकी** । स्त्री । ( Boswellia serrata ) Indian olibanum. शालविशेषे । शलई, शालविशेष । हिं शालइ, शलगा । मु° शालय धूपं । ता. कुंलि । तत्पर्य्यायाः,—गजभक्ष्या सुवहा सुरभिः सुरभी सुरभीरसा वसा कुन्दुरुकी ह्लादिनी गजप्रिया गजभक्षा गजाशना महारण्या महेरणा महेरुणा ह्लादिनी शिल्लकी सल्लकी सिल्लकी सिह्लकी सिह्लभूमिका अश्वमूत्री कुम्भी पत्रफला वरका सुखमोदा सुगन्धा सुरभिस्रवा गजवल्लभा ह्रस्वदा । गुणाः—"शल्लकी तुवरा शीता पित्तश्लेष्मातिसारजित् । रक्तपित्त-व्रणहरी पुष्टिकृत् समुदीरिता ।" भ.पू.१भ.वटादिव. । रा.

नि.व.११ । See सल्लकी । शिलारसे । शिलारस । च.सू.५अ. । [सु.४अ. ।

**शल्लकीत्वक्** । स्त्री । शल्लकीवृक्षत्वचि । च.

**शल्लकीद्रव: (रस:)** । पुं । सिह्लके । कुन्दुरु-खोटि, शिलारस । जटा० । च.द.वा.व्या.चि. अष्टादशशतीप्रसारणीतैले ।

**शल्ली** । स्त्री । सल्लकीवृक्षे । सल्लकीमृगे । सजारु । वै.निघ. ।

**शवम्** । क्ली । लोहे । जले । मे. ।

**शव:** । पुं, क्ली । मृतशरीरे । अम: ।

**शवकाम्य:** । पुं । कुक्कुरे । श.र. ।

**शवर:** । पुं । पानीये । हस्ते ।

**शवरलोध्र:** । पुं । शावरलोध्रे ।

**शवल:** । पुं । चित्रकरूपे । रा.नि.व६ । (ला, ली) स्त्री । शवलवर्णायां गवि । अ.टी.भ. । कर्बुरवर्णे ।

**शश: (क:)** । पुं । बिलेशयमृगभेदे । खरगोश । सं खरहा । तैं चेवुलपिल्लि । तत्पर्य्याया:,— मूलिक: मृदुलोमक: वनाखु: लम्बकर्ण: लोमकर्ण: शूली । तन्मांसगुणा:—त्रिदोषघ्नम् दीपनम् श्वास-कासघ्नञ्च । रा.नि.व.१७ । शीत लघु धारक रुच्यं स्वादु कफपित्तघ्नम् वाते साधारण ज्वरातीसारघ्नं सदा हितञ्च । भा.पू.१६ । "शशको जाङ्गलश्रेष्ठो लघुश्चाप्यथ दीपन: । रुचिकृत्तर्पणो बल्यस्त्रिदोषशमनो मत: । ज्वरे च पाण्डुरोगे च क्षये कासे गुदामये । राजयक्ष्मणि पाण्डौ च तथातीसारिणां हित: ॥" चनि.२०अ. । -लोभहने । बोले । शशबोल । सं. ।

**शशघाती (इन्)** । पुं । प्रसहजातीयपक्षिभेदे । बाज । सु.सू.४६अ. ।

**शशधर:** । पुं । कर्पूरे । रा.नि.व.१२ ।

**शशभृत्** । पुं । कर्पूरे । ऐ.च. । भैष.वा.व्या. गन्धद्रव्यकथने ।

**शशलोम (न्)** । क्ली । शशकरोमणि । अम. ।

**शशशिम्बिका** । स्त्री । दीर्घवृन्तलतायाम् । रा.नि.व.३ ।

**शशाङ्क:** । पुं । कर्पूरे । रा.नि.व.१२ ।

**शशाङ्कलेखा** । स्त्री । सोमराज्यां । च.द.कुष्ठ.चि. । गुड़ूच्याम् ।

**शशाण्डुलि: (ली)** । पुं । खगाण्डाकारफल-शाकविशेषे । তিৎকাঁকুড় । तत्पर्य्याया:,—बहु-फला तण्डुली धूम्रा क्षेत्रसम्भवा क्षुद्राम्ला लोमश-फला हस्तफला । गुणा:—तिक्ता कटु: कोमला कट्वम्लयुक्ता कफापहा जरठा पाके अम्ल-मधुरा विदाहकृत् शुष्का रुचिकृत् दीपनी च । रा.नि.व.७ ।

**शशाद: (न:)** । पुं । श्येनपक्षिणि । बाज । रा.नि.व.१९ । अम. ।

**शशिकान्त:** । पुं । चन्द्रकान्तमणौ । रा.नि.व.१३ । क्ली । कुमुदे । শ্বেত শুক্তি । रा.नि.व.१० ।

**शशिपर्णी** । स्त्री । पठोले । वै.निघ. ।

**शशिपुष्पम्** । क्ली । पद्मे । वै.निघ. ।

**शशिप्रभम्** । क्ली । मुक्तायाम् । रा.नि.व.१३ । कुमुदपुष्पे । নালফুল । श.मा. । स्त्री । ज्योत्स्नायाम् । जटा० ।

**शशिप्रियम्** । क्ली । कुमुदपुष्पे । मुक्तायाम् । वै.निघ. ।

**शशिरे(ले)खा** । स्त्री । गुड़ूच्याम् । गुलञ्च । मे. । सोमराज्याम् । হাকুচবীজ । भैष.कुष्ठ.चि. ।

**शशिवाटिका** । स्त्री । पुनर्नवायाम् । प.मु. । रा.नि.व.५ ।

**शशी (इन्)** । पुं । कर्पूरे । वै.निघ.२भ.चयरी.चि.लक्ष्मीविलासतैले ।

**शशोर्णम्** । क्ली । शशकलोम्नि । अम. ।

**शष्कुल:** । पुं । करञ्जवृक्षे । ডহরকরঞ্জ । श.र. ।

**शष्कु(स्कु)ली** । स्त्री । कर्णरन्ध्रे । কর্ণকুহর । श.र. । पिष्टकविशेषे । পুলিপিঠে । च.चि.२अ. । तिलपिष्टके । তিলের পিঠে । गुणा.—गुरु: पुष्टिकरी । च.सू.२७अ. । मत्स्यभेदे । सौहारोति लोके । हिं सौरी । गुणा:—"शष्कुली ग्राहिणी हृद्या मधुरा तुवरा मता ।" भा. । तिलतण्डुलनामकृतयवाग्वाम् । श.च. । "सुधौतानां तण्डुलानां पिष्टं सूक्ष्मं विधाय च । तत्प्रमाणं तत्र जलं स्थाप्यं चुल्ल्यां तु तत् पचेत् । अल्पमल्पं विकीर्य्याथ मेलयित्वा घनं पचेत् । घनीभूते तु उत्तार्य्य तत्-पर्पट्यां सुयन्त्रित: । पूरणञ्च विधायाथ सिता-श्रीफलकं तथा । तिहत्प्रान्तामर्द्धचन्द्रसमानां कार-येत् सुधी: । एव शष्कुलय: कार्य्या: पाच्या:

शाकानि विष्टम्भीनि गुरूणि च। रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च। पिण्डालुका मता भिण्डी चिञ्चुकान्या मता……। एते श्लेष्मकराः शाका वातलाश्चिप्रशान्तकाः। सर्व्वे शाका दृष्टिहरा वीर्य्यत्वात्तण्डुलीयकं। तथैव शतपुष्पा च जयन्ती कासमर्द्दकः। आनूपकाश्च वेत्राग्रं गुडूची चापमर्द्दकः। किरातनिक्तसहिताश्चिक्काः पित्तहरा मताः।" अचि·१६५.। सा. शाकपाकविधिर्य्यथा—"हिङ्गुजीरयुते तैले क्षिपेच्छाकं सुखण्डितं। लवणं चाम्रचूर्णादिसिद्धे हिङ्गूदकं क्षिपेत्॥ इत्येवं सर्व्वशाकानां साधनोऽभिहितो विधिः॥" पुं। वृक्षविशेषे। সেগুন গাছ। रा·नि·व ९। "महापत्रकर्कशोदरपृष्ठदलो वृक्षविशेषः" सु·सू·३८ष·। शाकफले। শেগুনফল। "राजाद्रं दाडिमं शाकम्।" वा.सु १५ष.।

**शाकचुक्रिका**। स्त्री। चिञ्चायाम्, तिन्तिड्याम्। তেঁতুল গাছ। रा·नि·व·११।

**शाकटः**। पुं। श्लेष्मान्तकवृक्षे। চালতা গাছ। रा·नि·व·११। धववृक्षे। ধাওয়া গাছ। र·मा·।

**शाकटसुखम्**। क्ली। पटवासे। गन्धचूर्ण। वै·निघ·।

**शाकटाख्यः**। पुं। धववृक्षे। र·मा·।

**शाकटीनः**। पुं। २० तुलापरिमाणे। २००० पलें। इ·च प·प्र·।

**शाकतरुः**। पुं। शाकवृक्षे। শেগুন গাছ। श्र·मा·।

**शाकद्रुमः**। पुं। वरुणवृक्षे। धं·निघ·।

**शाकपत्रः**। पुं। शिग्रुवृक्षे। সজিনা গাছ। रा.नि·व.७।

**शाकपार्थी (इन्)**। पुं। सुनिषण्णके। শুশুনি শাক। वै·निघ·।

**शाकफलम्**। क्ली। तन्नामकवृक्षफले। শেগুন ফল। सु·सू·३८ष·।

**शाकमत्स्यम्**। क्ली। मत्स्यव्यञ्जनभेदे। गुणाः—मत्स्यकशब्दे द्रष्टव्याः। राज·।

**शाकवालेयः**। पुं। ब्रह्मयष्ट्यां। বামুনহাটী। श्र.र.।

**शाकम्भरीभवम्**। क्ली। रोमकलवणे। সাম্ভর লবণ। भा·।

**शाकम्भरीयम्**। क्ली। रोमकलवणे। तत्पर्य्यायाः,—रोमकं रौमं रौमकं रौमलवणं साम्भरं साम्बरं रंसुकं। अपिच शाकम्भरीयं कथितं गड़ाख्यं रोमकं तथा। गुणाः—गड़ाख्यम् लघु वातघ्नमत्युष्णं भेदि पित्तलं। तीक्ष्णं व्यवायि सूक्ष्माभिष्यन्दि कटुपाकि च॥

**शाकयोग्यः**। पुं। धान्यके। धनियां। रा. नि·व·६।

**शाकराजः (ट्)**। पुं। वास्तूकक्षुपे। বেতো শাক। रा.नि·व·७। भा·।

**शाकवरः**। पुं। जीवशाके। प·मु·। वा·उ· ३०म.। स्त्री (रा)। जीवन्तीशाके। वै·निघ·।

**शाकवल्ली**। स्त्री। लताकरञ्जके। वै·निघ·।

**शाकविन्दः (ल्वः) (कः)**। पुं। वार्त्ताकुवृक्षे। जटा.। त्रिका.।

**शाकवीजम्**। क्ली। शाकतरुवीजे। শেগুনের বিচি। "मधुकं शाकवीजञ्च।" भा.४भ· योनिरो.गर्भचि.। मरुजतरुवीजे। च·द·गर्भाधिकारे। शाकवीजे। শাকের বিচি।

**शाकवीरः**। पुं। वास्तूकक्षुपे। বেতো শাক। पुनर्नवायाम्। त्रिका·। जीवशाके। रा·नि·व.०।

**शाकवृक्षः**। पुं। (Tectona grandis, Teak tree.) स्वनामख्यातवृक्षे। শেগুন গাছ। हिं सगुण। उत्. सिंगुरु। ता·टेक। वम्· खरपत्र। मं सोये। कं नेगु। तें टेकुचेट्टु। तत्पर्य्यायाः,—चनिलः अर्णः महापत्रः शाकतरुः शाकवृक्षः शाकाख्यः खरपत्रः अर्ज्जुनोपमः क्रकचपत्रः शरपत्रः महीरुहः श्रेष्ठकाष्ठः स्थिरसारः गृहद्रुमः। गुणाः—सारकः पित्त-दाह श्रमघ्नः सरः रुच्यश्च। तद्वल्कलं कषायम्। रा·नि·व·९।

**शाकशाकट(किन)म्**। क्ली। शाकक्षेत्रे। শাকের ক্ষেত। रा·नि·व·२। हे·च·।

**शाकशालः**। पु। महानिम्बे। महानिम्। हिं बकाइन। वै.निघ·।

**शाकश्रेष्ठः**। पुं। वास्तुकक्षुपे। श्र·र·। रा·नि· व.२३। स्त्री (ष्ठा)। लघुजीवन्तीलतायाम्। जीवन्ती। रा·नि·व·२। झोड़ीक्षुपे। गृतावृहती। वार्त्ताकी। বেগুণ গাছ। रा·नि.व·४। कुष्माण्डलतायाम्। কুমড়া গাছ। तरम्बुजलतायाम्। তরমুজ গাছ। वै·निघ·।

**शाका**। स्त्री। हरीतक्याम्। शब्दकल्पः।

**शाकाख्यम्।** क्ली। व्यञ्जनयोग्यफलमूलपत्र-पुष्पादौ। वाञ्जनाई फल, मूल, পাতা, फूल इत्यादि শাকপদবাচ্য। अम.। "मूलपत्र-करीराग्रफलकाण्डाधिरूढकम्। त्वक् पुष्पं कवकश्चैव शाकं दशविधं स्मृतम्" भ.टी.भ.। पुं। शाकवृक्षे। শেগুন গাছ। र.मा.।

**शाकाङ्गम्।** क्ली। मरिचे। रा.नि.व.६।

**शाकान्नम्।** क्ली। शाकयुक्तभक्ते। गुणाः— "शाकान्नं लेखनं चोष्णं रूक्षं वै दोषद्रावकम्।" वै.निघ.।

**शाकाम्लम्।** क्ली। वृक्षाम्ले। তেঁতুল। रा.नि.व.६। चिञ्चाम्ले। তেঁতুলের অম্বল। रा.नि.व.११।

**शाकाम्लभेदनम्।** क्ली। चुक्रनामककाञ्जिकभेदे। रा.नि.व.१५। See शुक्तचुक्रम्।

**शाकालावुः।** स्त्री। राजालावुके। বড়লাউ গাছ। रा.नि.व.७।

**शाकुनिकः।** पुं। शकुनशास्त्रज्ञे। पक्षिमारके। পাখীমারা। अम.।

**शाकुनेयः।** पुं। पक्षिभेदे। ডুণ্ডুল পক্ষী। रा.नि.व.१९।

**शाखा।** स्त्री। पल्लवे। ডাল। अम.।

**शाखाकण्टः।** पुं। स्नुहीवृक्षे। মনশা গাছ। रा.नि.व.८।

**शाखापित्तम्।** क्ली। हस्तपादांसमूलदाहे। मुखताल्वोष्ठादिषु सदाह-दवथौ। হাত পা ও মুখাদি জ্বালা। "सदाहमुखताल्वोष्ठं दवथुश्चक्षुरादिषु। पाणिपादांसमूलेषु शाखापित्तं तदुच्यते॥" रा.नि.व.२०।

**शाखामृगः।** पुं। कपौ। प.मु.।

**शाखाम्ला।** स्त्री। तिन्तिड़ीवृक्षे। रा.नि.व.६।

**शाखारोगः।** पुं। रक्तादिधातुलेषु त्वग्लेषु च वीसर्पगुल्मादिषु रोगेषु। च.सू.११अ.।

**शाखालः।** पुं। जलवेतसे। रा.नि.व.९।

**शाखावातः।** पुं। हस्त-पदादिगतवातरोगे। वैद्यकम।

**शाखाशिफा।** स्त्री। शाखाजातशिफायाम्। বটাদির নামাল। वै.निघ.।

**शाखी (न्)।** पुं। वृक्षे। গাছ। अम.।

**शाखोटः (कः)।** पुं। (Streblus asper,) स्वनामख्यातवृक्षे। শেওড়া গাছ। हिं सहोरा, रुसा सिंहोड़। कं ष्याद्वोड़मरग। मं साहोड़। तें भारपिकिचेट्टु, वरनृको। वंम् साहोड़ा। तत्पर्य्यायाः,—पिशाचद्रुः पीतफलः कर्कशच्छदः शङ्खिनीवासः भूतवृक्षः सकटः धबधरः भूः खरच्छदः गवाक्षी धूकावासः रूक्षपत्रः पीतः कैशिकबीजः चौरनाशः। गुणाः—तिक्तोष्णः पित्तकरः वातघ्न। रा.नि.व.९। एतद्दौनं श्विवहरं लेपनेनेति लोके। रक्तपित्तार्शोवातघ्नं सातिसारजित्। भा.।

**शाङ्करः।** पुं। सोमलताभेदे। सु.चि.२९अ.। वृषे। विका.। री (री)। शमीवृक्षे। वै.निघ.।

**शाङ्कितः।** पुं। ग्रन्थिपर्णभेदे। চোরা। वै.निघ.।

**शाङ्कुची।** स्त्री। शङ्खीमत्स्ये। শাঁকোচ মাছ। श.च.।

**शाङ्कुष्टा।** स्त्री। गुञ्जायाम्। र.मा.।

**शाञ्चो।** स्त्री। शालिञ्चशाके। रस.चि.९प.।

**शाटिका।** स्त्री। शट्याम्। শঠী। भ.टी.भ.।

**शाड्‌लः।** पुं। नीलदूर्व्वायाम्। वै.निघ.।

**शाणः।** पुं। माषचतुष्टयमिते मानविशेषे। ४ মাষা। "माषैश्चतुर्भिः शाणः स्यात्।" प.प्र.। "विन्दुभिश्चाष्टभिः शाणः प्रोक्तश्च भिषगुत्तमैः।" कषणप्रस्तरे। কষ্টিপাথর। अम.। लौहादिनिशाणचक्रे। শাণ। मे.।

**शाणिः।** पुं। पट्टशाकवृक्षे। পাটশাক। श.मा.।

**शाण्डिल्यः।** पुं। बिल्ववृक्षे। रा.नि.व.११।

**शातः।** त्रि। शाणिते। कृशे। पुं। धुस्तूरवृक्षे। ধুতুরাগাছ। अम.।

**शातकुम्भम्।** क्ली। सुवर्णे। रा.नि.व.१३। पुं। धुस्तूरवृक्षे। अम.। करवीरवृक्षे। मे.।

**शातकौम्भम्।** क्ली। सुवर्णे। म.हि.।

**शातपत्त्रकः।** पुं। चन्द्रप्रकाशे। श.च.।

**शातभीरुः।** पुं। मदनमालीनाममल्लिकावृक्षे। "शातभीरुर्भद्रवल्ली भूमिमण्डपादिका।" र.मा.।

**शातला।** स्त्री। स्वनामप्रसिद्धसेहुण्डभेदे। पीतसेहुण्डे। चर्म्मकषा इति लोके। মনসাভেদ। गुणाः—"शातला कटुका पाके वातला शीतला लघु। तिक्ता शोथकफानाहपित्तोदावर्त्तरक्तजित्।" भा.।

**शादः** । पुं । कर्द्दमे । कोमलतृणे । अम. ।

**शाद्वलः** । पुं । दूर्व्वायाम् । वा.चि.२अ. ।

**शाद्वलाभः** । पुं । मन्दविषवृश्चिकभेदे । "एभिर्दष्टे वेदना वेपथुश्च गात्रस्तम्भः कृष्णरक्तागमश्च । शाखादष्टे वेदना चोर्द्ध्वमेति दाहस्वेदौ दंशशोफो ज्वरश्च ॥" सु.कल्प.८अ. ।

**शानः** । पुं । ४ माषके । ४ मासा । "माषैश्चतुर्भिः शानः स्यात् ।" प.प्र.१ख । ३ माषके च । ७ मासा । अत्रि ।

**शानपादः** । पुं । चन्दनपीठिकायाम् । चन्दनपिँड़ी । भारतं ।

**शानी** । स्त्री । इन्द्रवारुण्याम् । राखालशशा । श.च. ।

**शान्तनुः** । पुं । कुधान्यविशेषे । सु.सू.४६अ. । कर्कटिकायाम् । काँकुड़गाछ । र.मा. ।

**शान्ता** । स्त्री । आमलक्याम् । रा.नि.व.११ । See अकरा । नीलदूर्व्वायाम् । रेणुकायाम् । शमीवृक्षभेदे । तत्पर्य्यायाः,—शुभा भद्रा अपराजिता जया विजया । तद्गुणाः—शमीसदृशाः । रा.नि.व.८ ।

**शान्तुतिः** । स्त्री । भार्ग्याम् । वामनहाटी ।

**शापटिकः** । पुं । मयूरे । शब्दकल्प: ।

**शाबरवल्कलम्** । क्ली । लोध्रत्वचि । वा.चि.९अ. ।

**शामीलम्** । क्ली । भस्मनि । छाइ । सा.कौ. ।

**शाम्बरः (रिकः)** । पुं । लोध्रवृक्षे । वै.निघ. ।

**शाम्बरी** । स्त्री । मूषिकमार्य्याम् । इन्दुरमारी गाछ । वै.निघ. ।

**शाम्बु(म्बू)कः** । पुं । शम्बूके । श.र. ।

**शाम्भवम्** । क्ली । देवदारुणि । रा.नि.व.१२ ।

**शाम्भवः** । पुं । गुग्गुलौ । रा.नि.व.१२ । विषभेदे । श.च. । कर्पूरे । रा.नि.व.१२ । शिवमल्लिकायाम् । बक वृक्ष । रा.नि.व.१० ।

**शाम्भवी** । स्त्री । धान्यादिकाबुक्याम् । धान्यादिर खोला । रा.नि.व.१६ । नीलदूर्व्वायाम् । रा.नि.व.८ ।

**शायकपुङ्खा** । स्त्री । शरपुङ्खायाम् ।

**शायिका** । स्त्री । निद्रायाम् ।

**शारङ्गः** । पुं । हरिणे । चातके । गजे । मयूरे । अ.टी.भ. ।

**शारदम्** । क्ली । शुक्लपद्मे । रा.नि.व.१० । पुं । शरत्कालीन-शालिधान्यभेदे । अयं षष्टिकाहीनगुणः । च.सू.२७अ. । हरितमुद्गे, धूसरमुद्गे । घेसोमुग । रा.नि.व.१६ । र.मा. । बकुलवृक्षे । रा.नि.व.२३ । कृष्णमुद्गे । कालमुग । रा.नि.व.२३ । सप्तपर्णवृक्षे । छातिम गाछ । अम. । च.द.मेह.चि. । "द्वयस्य शारदस्य च" । सरिफायाम् । महाराष्ट्रीलतायाम् । काँचड़ा । कासतृणे । रा.नि.व.२३ । रोगे । वत्सरे । मे. ।

**शारदजलम्** । क्ली । शरत्कालीनजले । See जलम् ।

**शारदमल्लिका** । स्त्री । शरत्कालभव-मल्लिकायाम् । शारदमल्लिका । रत्ना. ।

**शारदमुद्गः** । पुं । हरितमुद्गे । "कपित्थान् शारदान् मुद्गान् ।" सि.यो.अ.सा.चि. ।

**शारदयावनालः** । पुं । शारदीय-यावनाले । गुणाः—श्लेष्मकरः पिच्छिलः गुरुः शीतलः मधुरः हृद्यः बल-पुष्टिदश्च । रा.नि.व.१६ ।

**शारदा** । स्त्री । काष्ठशारिवायाम् । अनन्तमूल । रा.नि.व.१२ । ब्राह्मीशाके । रा.नि.व.५ ।

**शारदिकः** । पुं । शरत्कालीनरोगे । व्याक. ।

**शारदी** (इन्) । पुं । सप्तपर्णवृक्षे । छातिमगाछ । अम. । कच्छटशाके । काँचड़ाशाक । र.मा. । अपराजितायाम् । श.द. । स्त्री । (दी) जलपिप्पल्याम् । शारिवायाम् ।

**शारिः (का)** । स्त्री । स्वनामख्यातपक्षिणि । शालिक, मयना । त्रिका. । शालिधान्यभेदे । च.सू. २७अ. ।

**शारिवा** । स्त्री । ( Hemidesmus Indicus, Syn. asclipias pseudosarsa. ) स्वनामप्रसिद्धलतायाम् । "जम्बूपत्रा दुग्धगर्भा वल्ली स्वनामख्याता ।" सु.सू.३८अ. । अनन्तमूल । हिं अनन्तमूल, उपलसरी । उत्. गुयापानमूल । कों गैंववेल । तत्पर्य्यायाः,—गोपी श्यामा अनन्ता उत्पलशारिवा । सा द्विधा श्वेता कृष्णा चेति । भा.पू.१भ. काष्ठशारिवा चेचुरापथे प्रसिद्धा । गुणाः—शारिवायुगलं स्वादु स्निग्धं शुक्रकरं गुरु अग्निमान्द्यारुचिश्वासकासवमिहरणाम् त्रिदोषघ्नं

रक्तप्रदरज्वरातीसारनाशनश्च। मद.व.व.१। मधुरे हिमे मतश्री कुष्ठकण्डूज्वरहरे देहदुर्गन्धहरे च। रा.नि.व.१२। शुक्लं स्निग्धं स्वादु अग्निमान्द्यादिहरञ्च। भा.पू.१भ.। वै.निघ.मा.ज्व.चि.चक्रादि. दुरालभायाम्। पटोलादौ, वासकादौ। वै.निघ. उन्मा.चि.सारस्वतघृते।

**शारी**। स्त्री। कुशे, अरण्यकुशे, सुवर्णे। रा. नि.व.८। शारिकायाम्।

**शारीरम्**। क्ली। (Anatomy.) सुश्रुतादिवैद्यकसंहितासु शरीरमधिकृत्य कृते शरीरवृत्तान्तव्याख्याने अन्यतमे स्थाने। यत्र शुक्रशोणितशुद्धिगर्भावक्रान्ति-गर्भ-शरीर संख्या मर्म्मशिरा-शिराव्यधधमनीगर्भिणीव्याकरणानि कृतानि। सु.शा.च.शा. १८.। पुं। वृषे। मे.। See शरीरम्।

**शारीरकग्रन्थः**। पुं। श्रीमुखविरचितशारीरशास्त्रे।

**शारीरगुणः**। पुं। दैहिकगुणसमष्टौ। सच विंशतिसंख्यकः, यथाः—लघु-गुरु-शीतोष्ण स्निग्धरूक्ष-मन्दतीक्ष्ण-स्थिरसरमृदु-कठिन-विशद पिच्छिल-श्लक्ष्ण-खरसूक्ष्मस्थूलसान्द्रद्रवा इति। च.सू.१८.।

**शारीरज्वरः**। पुं। देहगतज्वरे। लक्षणं—"शारीरो जायते पूर्व्वं देहे मनसि मानसः। इन्द्रियाणाञ्च वैकृत्यं देहसन्तापलक्षणम्॥" च.चि. ३८.।

**शारीरव्रणः**। पुं। शरीरसम्बन्धिवातादिदोषजनितव्रणे। स द्विविधः शारीरागन्तुभेदेन। यथा—"द्विधा व्रणः स विज्ञेयः शारीरागन्तुभेदतः। दोषैराद्यस्तयोरन्यः शस्त्रादि-क्षतसम्भवः। स्तब्धः कठिनसंस्पर्शो मन्दस्रावो महारुजः। तुद्यते स्फुरति श्यावो व्रणो मारुतसम्भवः। तृष्णामोहज्वरक्लेददाहदुष्ट्यवदारणैः। व्रणं पित्तकृतं विद्याद्गन्धैः स्रावैश्च पूतिकैः। बहुपिच्छो गुरुः स्निग्धः स्तिमितो मन्दवेदनः। पाण्डुवर्णोऽल्पसंक्लेदश्चिरपाकी कफव्रणः। रक्तो रक्तस्रुती रक्तात् द्विचिजः स्यात्द्वन्द्वैः। त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः। धीमतोऽभिनवः काले सुखे साध्यः सुखं व्रणः। गुणैरन्यतमैर्हीनस्ततः कृच्छ्रो व्रणः स्मृतः। सर्व्वैर्विहीनो विज्ञेयस्त्वसाध्यो भूर्य्युपद्रवः॥" इत्यादि। मा.नि.।

**शार्क्कः**। पुं। शर्करायाम्। चिनि। श.र.।

**शार्क्ककः**। पु। दुग्धफेने। शर्करापिण्डे। मे.।

**शार्क्करः**। पुं। क्षीरफेने। दुग्धफेने। मे.।

**शार्क्करमद्यम् (शीधुः)**। क्ली, पुं। शर्कराधातकीसिद्धमद्ये। लक्षणं—"शर्कराधातकीतोयक्वथितैः शार्क्करी मता।" इति। द्रव्यगुणमाला। गुणाः—शीतं हृद्यं दीपनं मोहनञ्च। रा.नि.व. १४। अन्यः शर्कराजातशीधुमद्ये। गुणाः—मधुरः रुच्यः दीपनः बस्तिशोधनश्च। सु.सू.४५च.।

**शार्क्करिलः**। वि। शर्करान्वितभूमिखे। शर्करामृत्तिके। व्याक.।

**शार्ङ्गम्**। क्ली। आर्द्रके। आदा। रा.नि.व.६।

**शार्ङ्गधरः**। पुं। स्वनामख्यात-चिकित्सासंग्रहकारे। ज्वरविशतीकारे।

**शार्ङ्गधरदीपिका**। स्त्री। आढमल्लकृते शार्ङ्गधरटीकाविशेषे।

**शार्ङ्गवेरिकः**। पुं। शृङ्गीसमानवर्णे स्थावरविषभेदे। चवि.३स्थान, ५९च.।

**शार्ङ्गष्टा**। स्त्री। काकजङ्घायां। काँटी उड़दौडिनि। सु.चि.२३च.। काकमाच्याम्। गुञ्जायाम्। सु.सू.३८च.।

**शार्ङ्गी(ङ्गु)ष्टा**। स्त्री। महाकरञ्जे। उदकरञ्जे। रा.नि.व.९। वा.उ.२च.। लताकरञ्जे। काकमाच्याम्। वै.निघ.।

**शार्द्दूलः**। पुं। व्याघ्रे। रा.नि.व.१९। चित्रकवृक्षे। रा.नि व.६। तदाख्य-पक्षिविशेषे। धरणि.। शरभे। मे.।

**शार्द्दूलकन्दः**। पुं। अरण्यपलाण्डौ।

**शार्द्दूलजम्**। क्ली। व्याघ्रनखे। नखी। वै.निघ.।

**शार्व्वरी**। स्त्री। रात्रौ। अ.टी.भ.। रोध्रे। लोध। वै.निघ.।

**शालः**। पुं। शाले। धुनो। रा.नि.व.१२। शालि। मत्स्यभेदे। शाल माछ, गजाड़। विका.। वृक्षे। रा.नि.व.२। लकुचवृक्षे। रा.नि.व.९। (Shorea robusta.) स्वनामख्यातवृक्षे। शाल गाछ। हिं शाल, साखुआ। तें एपचेट्टु। ता. कुङ्गिलियम्। गुलं, गल्ल। गुणाः—.......... कषायः स्यात् व्रणस्वेदकफक्रिमीन्। व्रणविद्रधिबाधिर्य्ययोनि कर्ण-गदान् हरेत्॥" भा.पू.१भ. वटादि। शठौ। सु.चि.९च.। अर्ज्जुनवृक्षे। प्रियालवृक्षे। वै.निघ.।

**शवम्** । क्ली । शवाले । टैवाल । श.च. ।

**शवः** । पुं । धुस्तूरवृक्षे । रा.नि.व.१० । श्वेतरक्तवसुके । रा.नि.व.५ । अगस्तिवृक्षे । बकफुल । रा.नि.व.१० ।

**शैवपत्रः** । पुं । बिल्ववृक्षे । रा.नि.व.११ ।

**शैवमल्लिका** । स्त्री । शिवलिङ्गीलतायाम् । शिवलिङ्गिनी । रा.नि.व.३ ।

**शैवलम्** । क्ली । पद्मकाष्ठे । पुं । शैवाले । रा.नि.व.८ । मे. । सु.सू.३८अ. पित्तशमने ।

**शैवालम्** । क्ली । जलनील्याम् । शेओला । तत्पर्यायाः,—जलनीली शैवलः शेवालं शैवलं शीवलं शैवालः जलनीलः जलनीलिका अम्बुचामरः जलकुन्तलः मञ्जुलं सेवालं शैवालं शैवं शवलं वारिचामरं सलिलकुन्तलं कटपर्णी अम्बुतालः जलम्लुकं जलाशनं जलकेशः जलपृष्ठजा जलजं चरकः काशारं । गुणाः—शीतलं स्निग्धं व्रणघ्नञ्च । रा.नि.व.८ । अपिच—"शैवालं तुवरं तिक्तं मधुरं शीतलं लघु । स्निग्धं दाह-तृषा-पित्त-रक्त-ज्वरहरं परम् ॥" भा. ।

**शैशिरः** । पुं । श्यामचटके । श्याम पाखी । रा.नि.व.१९ । बदरवृक्षे । वै.निघ. ।

**शैशिरिकम्** । क्ली । शीतबीजे । देवदारु ।

**शोकः** । पुं । बन्ध्वादिवियोगजन्यमनोवेदनायाम् । भा.म.ख.ज्वरा.चि. । अशोकवृक्षे । वै.निघ. ।

**शोक(दोष)घ्नः** । पुं । अशोकवृक्षे । रा.नि.व.१० ।

**शोकजातिसारः** । पुं । दुःखादिनाशजन्याति सारे । See अतीसारः ।

**शोकज्वरः** । पुं । शोकजन्यज्वरे । तस्य लक्षणं वेपथुः । मा.नि. ।

**शोकनाशः (नः)** । पुं । अशोकवृक्षे । रा.नि.व.१० ।

**शोकशोषः** । पुं । शोकजन्यशोषरोगे । लक्षणम् —"प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः । विना शुक्रक्षयकृतैर्विकारैरुपलक्षितः ॥"

**शोकारिः** । पुं । कदम्बवृक्षे । श.च. ।

**शोचिष्केशः** । पुं । चित्रकवृक्षे । अम. ।

**शौटीर्य्यम्** । क्ली । वीर्य्ये । श.र. ।

**शोठः** । पुं । पारावते । श.र. ।

**शोणम्** । क्ली । सिन्दूरे । रा.नि.व.१३ । रक्तधातौ । रा.नि.व.१८ । पुं (णः, कः) । स्वनामख्यातभारतवर्षीयनदविशेषे । शोण नद । तज्जलगुणाः—रुच्य सन्तापहर शोषघ्नं वह्निदीपनं बलकरं पुष्टिकरं पथ्यञ्च । रा.नि.व.१४ । रक्तेक्षौ । श्योणाके । मे. । रक्तपुनर्नवायाम् । रा.नि.व.५ । (कः) पृथुशिम्बश्योणाकवृक्षे । शोणापाठा । रा.नि.व.९ । "कामदूतौ च शोणकः ।" भा.म.१भ. ज्व.चि. । (त्रि) रक्तवर्णे ।

**शोणझिण्टिका (ण्टी)** । स्त्री । रक्तझिण्टीवृक्षे । लाल झांटी । रा.नि.व.१० । See रक्ताम्लानः ।

**शोणपत्रः** । पुं । रक्तपुनर्नवायाम् । रा.नि.व.५ ।

**शोणपद्म(क)म्** । क्ली । रक्तकमले । रा.नि.व.१० । See कोकनदम् ।

**शोणपुष्पः (कः)** । पुं । कोविदारवृक्षे । रक्त काञ्चन । रा.नि.व.१० ।

**शोणपुष्पी** । स्त्री । सिन्दूरपुष्प्यां । रा.नि.व.१० ।

**शोणफलिनी** । स्त्री । पीतपुष्पकाञ्चनवृक्षे । वै.निघ. ।

**शोणरत्नम्** । क्ली । माणिक्ये । रा.नि.व.१३ । पद्मरागमणौ । अम. ।

**शोणशालिः** । पुं । रक्तशालौ । लालधानि, नशनटे । रा.नि.व.१६ ।

**शोणसम्भवम्** । क्ली । पिप्पलीमूले । पिपुल-मूल । रा.नि.व.६ ।

**शोणा** । स्त्री । रक्तझिण्ट्याम् । वै.निघ. ।

**शोणाकः** । पुं । श्योणाकवृक्षे । शोणा गाछ । अम. ।

**शोणितम्** । क्ली । रक्तधातौ । रक्त । रा.नि.व.१८ । कुङ्कुमे । रक्तकुङ्कुमे । रा.नि.व.१२ । निर्यासे । आठा । रस.र.ने.रो.चि. । ताम्रे । तामा । प्रयोगा.चयोदशायसे । रस.र.व्रणगजाङ्कुशे । हिङ्गुले । रस.को.ज्वरान्तकरसे ।

**शोणितचन्दनम्** । क्ली । रक्तचन्दने । रा.नि.व.१२ ।

**शोणितमोक्षणम्** । क्ली । रक्तमोक्षणे ।

**शोणितवहस्रोतः (स्)** । क्ली । रक्तवहनाड्यां । तस्य मूलं यकृत् प्लीहा च । च.वि.५अ. ।

**शोणितसम्भवम्** । क्ली । मांसधातौ । वद्यकम् ।

**शोणिताभिधम्** । क्ली । कुङ्कुमे । वै निघ॰ ।

**शोणितार्व्वुदम्** । क्ली । शूकरोगभेदे । लक्षणं यथा—"कृष्णस्फोटैः सरक्तैश्च पिड़काभिश्च पीड़ितं । यस्य वस्तिरुजश्चोग्रा ज्ञेयं तच्छोणितार्व्वुदम् ॥" सु॰नि॰१४अ॰ । रक्तजन्यार्व्वुदरोगे । ब्लड्स् व्याव् । लक्षणं—"शिरास्थं शोणितं दोषः सङ्कोच्यान्तः प्रपीड्य च । पाचयेत तदानद्धं सास्रावं मांसपिण्डितं । मांसाङ्कुरैश्चितं याति वृद्धिञ्चाशु स्रवेत्ततः । अजस्रं दुष्टरुधिरं भूरि तच्छोणितार्व्वुदम् ॥" भा॰उ॰२९अ॰ ।

**शोणितार्शः(स्)** । क्ली । नेत्रवर्त्मगतरोगविशेषे । लक्षणं यथा—"छिन्नाश्छिन्ना विवर्द्धन्ते वर्त्मस्था मृदवोऽङ्कुराः । दाह-कण्डू-रुजोपेतास्तेऽर्शःशोणितसम्भवाः ॥" सु॰उ॰३अ॰ । रक्तार्शसि ।

**शोणिताह्वयम्** । क्ली । कुङ्कुमे । र॰मा॰ ।

**शोणितोत्पलम्** । क्ली । रक्तोत्पले । वै॰निघ॰ ।

**शोणोपलः** । पुं । माणिक्ये । रा॰नि॰व॰१३ ।

**शोथः(कः)** । पुं । स्वनामकरोगभेदे । फूलो रोग । रा॰नि॰व॰२० । तस्य विप्रकृष्टनिदानं यथा —"शुद्ध्यामयाऽभक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्ण-गुरूपसेवा । दध्याम-मृच्छाक-विरोधि-दुष्ट-गरोपसृष्टान्ननिषेवणञ्च । अर्शांस्यचेष्टा वपुषो ह्यशुद्धिर्मर्माभिघातो विषमा प्रसूतिः । मिथ्योपचारः प्रतिकर्म्मणाञ्च निजस्य हेतुः श्वयथोः प्रदिष्टः ॥" सन्निकृष्टनिदानमाह—"दोषैः पृथग्द्वयैः सर्व्वैरभिघाताद्विषादपि । सर्व्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकः ॥" सम्प्राप्तिपूर्व्वं सामान्यलक्षणमाह— "रक्तपित्तकफान् वायुर्दुष्टो दुष्टान् वहिःशिराः । नीत्वा रुद्धगतिस्तैर्हि कुर्य्यात्त्वङ्मांससंश्रयम् । उत्सेधं संहतं शोथम् तमाहुर्निचयादतः ॥ सगौरवम् स्यादनवस्थितत्वम् सोत्सेधमूष्माथ शिरातनुत्वम् । सलोमहर्षं च विवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥" असाध्यलक्षणमाह—"श्वासः पिपासा छर्द्दिश्च दौर्व्बल्यं ज्वर एव च । यस्य चान्ने रुचिर्नास्ति शोथिनं तं विवर्ज्जयेत् ॥" मा॰नि॰ । स षड्विधः—अवयवसमुत्थः शोफोऽभिहितः लक्षणतः प्रतीकारतश्च । सर्व्वसरस्तु पञ्चविधः यथा—वातजोऽरुणः कृष्णो वा, पित्तजः पीतः, कफजः पाण्डुवर्णः, सन्निपातजः सर्व्ववर्णः, शोणितजः पीतः, आगन्तुजः पित्तजो वा लोहितावभासश्च । पथ्ये पिष्टान्नाम्ललवणमद्यमृत्तिकादिवानिद्रास्त्रीसेवनघृततैलादि त्याज्यम् । सु॰चि॰२३अ॰ । अण्डस्य शोथरोगलक्षणं यथा—"वेदनास्थौल्यसंयुक्तं मृदुस्पर्शन्तु शीतलं । शोथं वातात्मकं विद्याद्दाहादिदृश्यसमुद्भवं । रक्तपित्तेन शोथः स्यात् कृष्णपाकेन संयुतः । वेदनोष्णसमायुक्तः नाम्यण्डोष्कन्नकस्तथा । कठिनत्वासहत्वाभ्यां युक्तं रुग्दाहवर्ज्जितं । श्लेष्मशोथं विजानीयाद्रक्तजं पित्तलक्षणम् । सर्व्वलिङ्गं विदुर्वैद्याः सन्निपातसमुद्भवम् ॥" ज॰द॰४९अ॰ ।

**शोथकम्** । क्ली । कङ्कुष्ठे । গৈরিক ধাতু । रा॰नि॰व॰१३ ।

**शोथघ्नी** । स्त्री । रक्त-पुनर्नवायाम् । अत्र । "शोथघ्नीन्द्रयवा पाठा ।" भा॰म॰१भ॰शोथातीसारचि॰ । शालपर्ण्याम् । रा॰नि॰व॰४ ।

**शोथजनेत्रपाकः** । पुं । सर्व्वाक्षिरोगे । निदा॰ ।

**शोथजि(हृ)त्** । पुं । भल्लातकवृक्षे । ভেলা-গাছ । प॰मु॰ । पुनर्नवायाम् । শ্বেতপুনর্ণা । विका॰ ।

**शोथजिह्मः** । पुं । पुनर्नवायाम् । विका॰ ।

**शोथारिः** । पुं । पुनर्नवायाम् । रस॰र॰वह्निभल्लातरसे ।

**शोथोदरारिलोहः** । पुं । उदराधिकारे औषधम् । क्वाथार्थे—पुनर्नवा गुडूची चित्रकमूलं गोरक्षतण्डुलामूलं (গোরক্ষচাকুলিয়ার মূল), माणमूलं स्नुहीमूल (তেকাঁটা-সিজুর মূল), सूर्य्यावर्त्तमूलं (হুড়হুড়ের মূল), अर्कमूलं प्र॰ ८ प॰ वारि ६४ श॰ शे १६ श॰ । क्वाथे पुटितलौहं ८ प॰ घृत ८ प॰ अर्कक्षीरं २ प॰ स्नुहीक्षीरं ४ प॰ शुद्धगुग्गुलः २ प॰ गन्धकपारदयोः यथाक्रमं पलार्द्धपलयोः कज्जलिः । अथ एकत्र सम्मिश्र्य पचेत् । आसन्नपाके जयपालबीजं मृततार्क्ष्यं मृताभ्रं कङ्कुष्ठं चित्रकमूलचूर्णं वनशूरणचूर्णं शरपुङ्खाचूर्णं घण्टाकर्ण(ঘেঁটু) चूर्णं पलाशबीजचूर्णं चोरिकाचूर्णं (থিয়াইচূর্ণ) तालमूलीचूर्णं त्रिफलाचूर्णं विड़ङ्गचूर्णं त्रिवृच्चूर्णं दन्तीमूलचूर्णं सूर्य्यावर्त्तमूलचूर्णं गोरक्षतण्डुलामूलचूर्णं पुनर्नवाचूर्णं शाड़्खचूर्णञ्च मिलित्वा ८ प॰ प्रक्षिप्य समालोड्य च घृतभाण्डे स्थाप्यः । भैष॰ । रस॰र॰ ।

**शोधकम्** । क्ली । कङ्कुष्ठे । रा॰नि॰व॰१३ ।

**शोधनः** । त्रि । शोधनद्रव्ये, निम्बादौ । भा॰म॰

४म·योनिरो·चि· । गुडिकारके प्रलेपादौ । भा. । क्लो । कासीसे । हिरेकस् । कद्रुठे । रा.नि·व. १३ । धातुशुडिकरणे । तन्न वमनविरेचनास्थापन शिरोविरेचनभेदेन चतुर्द्धा भवति । वा·सू·१५ अ· । विष्ठायाम् । श·च· । पुं । द्वादशांशावशिष्ट-कषाये । "शोधनो द्वादशांशकः ।" रा·नि·व.२० । निम्बवृक्षे । निमगाछ । रा.नि·व·११ । स्त्री (नी) । सम्मार्ज्जन्याम् । अम· । नील्याम् । रा·नि·व.४ । चित्रकूटख्यात ताम्रवल्लीलतायाम् । रा·नि·व·३ । क्षुद्रौ । वै.निघ· ।

**शोधनीवीजम्** । क्लो । जैपालबीजे । जयपाल । रा·नि·व·६ ।

**शोफः** । पुं । शोथरोगे । फूला । रा.नि.व.२० । सर्व्वाधिरोगे । विका· ।

**शोफकरः** । पुं । भल्लातके । वै.निघ. ।

**शोफहृत्** । पुं । भल्लातकवृक्षे । भा. ।

**शोफघ्नी** । स्त्री । शालपर्ण्याम् । रा·नि·व.४ । रक्तपुनर्नवायाम् । रा·नि·व·५ ।

**शोफनाशनः** । पुं । नीलवृक्षे । रा·नि·व·८ । त्रि । शोथनाशके ।

**शोफहारी (रिन्)** । पुं । वनवर्व्वरिकायाम् । बाबूई-तुलसी । रा·नि·व·१० ।

**शोफारिः** । पुं । हस्तिकन्दे । वै.निघ. ।

**शोभनम्** । क्लो । पद्मे । श·च· । कङ्कुष्ठे । वै. निघ· । कुङ्कुमे । त्रि । सुन्दरे ।

**शोभनकः** । पुं । शोभाञ्जनवृक्षे । सजना गाछ । श·च· ।

**शोभना** । स्त्री । हरिद्रायाम् । रा·नि·व.६ । गोरोचनायाम् । रा·नि·व·१२ ।

**शोभनाननः** । पुं । सुगन्धाञ्चके । वै.निघ· ।

**शोभनीया** । स्त्री । गोरचनुख्याम् । महा-सुखीर्य्याम् । मुण्डिरो । वै·निघ· ।

**शोभा** । स्त्री । हरिद्रायाम् । रा·नि·व·६ । गोरोचनायाम् । रा·नि·व·१२ । शुक्ल-जात्याम् । चामेलि । वै.निघ· । कान्तौ ।

**शोभाञ्जनः** । पुं । ( Moringa pterygosperma. Syn. Hyperanthira moringa.) Horse radish tree. नील-शिग्रुवृक्षे । नीलसजिना गाछ, सेनगा, सजना । हिं सोहिञ्जन, सञ्जन । मं कालामेगवा । कं करिय-नुग्गि । तें मुनगा । ता·मोरुङ्ग । पम्.शेगव, सेगत । तत्पर्य्यायाः,—शिग्रुः तीक्ष्णगन्धः तीक्ष्णगन्धकः अक्षिवः अवीवः मोचकः मोभाञ्जनः मौभाञ्जनः विद्रधिनाशनः मधुगुञ्जनः हरितशाकः शाकपत्रः शिग्रुकः उपदंशः बमादंशः कोमलपत्रकः बहुमलः दंशमूलः तीक्ष्णमूलः उग्रः कामिनीशः शोभनकः शोभाञ्जनः सुभाञ्जनः सुतीक्ष्णः वनपल्लवः श्वेत-मरिचः कटुकन्दः तीक्ष्णः गन्धः गन्धकः कालीवकः मेचकः आचीवः शमाञ्जनः स्त्री·चित्तहारी द्रविप·नाशनः क्रूरगन्धा मूलकपर्णी मोचः नीलशिग्रुः जनप्रियः सुखमोदः कृष्णशिग्रुः चक्षुष्यः रुचि-राञ्जनः । गुणाः—तीक्ष्णः कटुः स्वादूष्णः पिच्छिलः क्रिमिवातशूलघ्नः चक्षुष्यः रोचनश्च । रा·नि·व·७ । तत्पुष्पं—कटु-तीक्ष्णोष्णं स्नायुशोथकरं क्रिमिघ्नम् वातकफघ्नम् विद्रधिप्लीहगुल्महरम् । मधुशिग्रुपुष्पम् नेत्रहितं रक्तपित्तप्रसाधनञ्च । शोभाञ्जनफलं ( तें मुनगपंडु ) स्वादु कषाय कफपित्तघ्नं शूलकुष्ठक्षय-श्वासगुल्मघ्न दीपनञ्च । भा·पू·१भ·शा·व· ।

**शोलिका (ली)** । स्त्री । वनहरिद्रायाम् । वन हलुद । सालि, षड़िविषका, अरिमिनि, इति कोङ्कणे प्रसिद्धा । गुणाः—कटुः शोल्या रुच्या तिक्ता दीपनी च । रा·नि·व·७ ।

**शोषः** । पुं । राजयक्ष्मणि । सन्तापे । रा.नि·व. २० । धातुक्षये । मा·नि· । यक्ष्मरोगविशेषे । तन्नि-रुक्तिः यथा—"अतिव्यवायिनो वापि क्षीणे रेत-स्यनन्तराः । क्षीयन्ते, धातवः सर्व्वे ततः शुष्यति मानवः ॥" इति । शोषे उत्पन्ने प्रतिलोमक्षयो भवति तद्यथा—शुक्रे क्षीणे मज्जा, मज्जनि क्षीणे अस्थि च क्षीयते एवं यथा पूर्व्वं क्षीयते । स द्विधा व्रणोरःक्षतभेदेन See राजयक्ष्म ।

**शोषणम्** । क्लो । शुण्ठ्याम् । रा·नि·व·६ । पिप्पल्याम् । रस·र·चन्द्रोदयरसे । "जातीफलम् शोषणमिन्द्रपुष्पम् ॥" पु । षोड़शांशावशिष्टकषाये । "विशोषः षोड़शांशश्च ।" रा·नि·व·२० । श्योनाक-वृक्षे । शोणा गाछ । भा· ।

**शोषसम्भवम्** । क्लो । पिप्पलीमूले । रा·नि·व·६ ।

**शोषहा (न्)** । पुं । जलापामार्गे । वै.निघ. ।

**शोषापहा** । स्त्री । वल्लियष्टिमधुके । यष्टिमधु । रा·नि·व ६ ।

**शौकरी** । स्त्री । वाराहीकन्दे । वै.निघ. ।

**शौक्तिकम्** । क्ली । मौक्तिके । मुक्ता । भा. । स्त्री (का) । मुक्तायुक्तौ । झिनुक । वै.निघ. ।

**शौक्तिकेयम्** }
**शौक्तेयम्** } क्ली । मुक्तायाम् । प.मु. ।

**शौक्लिकेयः** । पुं । विषे । प.मु. । सोमलतायाम् । वै.निघ । विषभेदे । अम. । शुक्तिकोदेशविशेषस्तत्र भवः शौक्लिकेयः । भा. ।

**शौल्लरम्** । क्ली । गल्लकतायाम् । अम. ।

**शौग्रम्** । क्ली । शोभाञ्जनबीजे । सजिनाबीज । वै.निघ. । See शिग्रुबीजम् ।

**शौचविधिः** । पुं । मूत्रपुरीषोत्सर्गादिकार्य्ये । प द-दिनचर्य्या ।

**शौचाधानम्** । क्ली । पवित्रतानुष्ठाने । गुणाः —"मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनं । पादयोर्मलमार्गाणां शौचाधानमभीक्ष्णशः ॥" राज.१प. ।

**शौटीर्य्यम्** । क्ली । शौण्डीरे । वीर्य्ये । श.र. ।

**शौण्डी** । स्त्री । पिप्पल्याम् । रा.नि.व.२३।६ । कृष्णकटभीवृक्षे । रा.नि.व.९ । See कटभी । चव्यं । चई । विश्व. ।

**शौण्डः (ण्डी)** । पुं, स्त्री । देवधान्ये । कुक्कुटे । वै.निघ. । स्त्री (ण्डी) । पिप्पलीमूले । वै.निघ. ।

**शौण्डिकम्** । क्ली । पिप्पलीमूले । वै.निघ. ।

**शौण्डिकप्रियः** । पुं । आम्रवृक्षे । वै.निघ. ।

**शौधिका** । स्त्री । रक्तफल्गौ । लाल कांनी । उ.प. ।

**शौभः** । पुं । गुवाकवृक्षे । श.मा. ।

**शौभाञ्जनः** । पुं । शोभाञ्जनवृक्षे । भ.दि. ।

**शौरिप्रियम्** । क्ली । नीलहीरके । प.मु. । See इन्द्रोपलम् ।

**शौरिरत्नम्** । क्ली । नीलमणौ । रा.नि.व.१३ ।

**शौलफम्** । क्ली । मुलुफाशाके । शब्दकल्पः ।

**शौल्यशीतः** । पुं । चैत्रेषो । अनाज । प.मु. ।

**शौषिरः** । पुं । दन्तवेष्टगतरोगविशेषे । लक्षणं यथा—"श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तजः । लालास्रावी स विज्ञेयः कण्डूमान् शौषिरो गदः ॥" सु.नि.१६प. ।

**शौष्कलः** । त्रि । मत्स्यमांसभक्षके । अम. ।

**श्मन्** । क्ली । मुखे । भ. ।

**श्मश्रु** । क्ली । पुंमुखे दीर्घलोमराजिषु । दाड़ि । श्मश्रुकर्त्तनगुणाः—"पौष्टिकं बल्यमायुष्यं शौचरूपविराजनं । केशश्मश्रुनखादीनां कर्त्तनं सम्प्रसादनम् ॥" राज.३प. ।

**श्मश्रुमुखी** । स्त्री । श्मश्रुयुक्तनार्य्यां । श.र. ।

**श्मश्रुशेखरः** । पुं । नारिकेलवृक्षे । वै.निघ. ।

**श्यामम्** । क्ली । मरिचे । सिन्धुलवणे । मे. । पुं । श्यामाके । श्यामा घास । रा.नि.व.१६ । वृद्धदारके । बीजताड़क । कोकिले । मे. । धुस्तूरवृक्षे । रा.नि.व.१० । पीलुवृक्षे । रा.नि.व.११ । दमनकवृक्षे । गन्धतृणे । विश्वः । त्रि । कृष्णवर्णे ।

**श्यामकः** । पुं । स्वनामख्याततृणधान्यविशेषे । श्यामाधान । बम्. सांवा । कं सामे । तें चामधान्यमु । गुणाः—मधुरः स्निग्धः कषायः लघुः शीतलः वातकरः कफपित्तघ्नः संग्राही विषदोषघ्नश्च । रा.नि.व.१६ । क्ली । रोहिषतृणे । गन्धतृण वा ग्रामरपूँच । रा.नि.व.८ ।

**श्यामकण्ठः** । पुं । मयूरे । हला. । श्यामकण्ठपक्षिणि । नीलकण्ठ पाखी । शब्दकल्पः ।

**श्यामकन्दा** । स्त्री । अतिविषायाम् । आतईच । रा.नि.व.६ ।

**श्यामकाण्डा** । स्त्री । गण्डदूर्व्वायाम् । गेंटेदूर्व्वा । रा.नि.व.८ ।

**श्यामग्रन्थिः** । स्त्री । गण्डदूर्व्वायाम् । गांठा दूर्व्वा । रा.नि.व.८ ।

**श्यामचटकः** । पुं । भारिटपक्षिणि । भाड़ुई पाखी ।

**श्यामचूड़ा** । स्त्री । कृष्णचटकायाम् । श्यामा पाखी । वै.निघ. ।

**श्यामपत्रः** । पुं । तमालवृक्षे । श.च. । स्त्री (त्रा) । जम्बूवृक्षे । जाम गाछ । वै.निघ. ।

**श्यामपर्णः** । पुं । शिरीषवृक्षे । वै.निघ. ।

**श्यामपर्णी** । स्त्री । 'धा' इति प्रसिद्धे ग्रेपार्श्वपरनामधेये वृक्षभेदे । See ग्रेपारिः ।

**श्यामभूषणम्** । क्ली । मरिचे ।

**श्याममृगः** । पुं । कृष्णवर्णहरिणे । प. ।

**श्यामलः** । पुं । पिप्पलवृक्षे । অশ্বথ গাছ । रा॰नि॰व॰११ । मद॰व॰५ । नीलभृङ्गराजे । নীল-ভৃঙ্গ ভীমরাজ । रा॰नि॰व॰४ । शिरीषवृक्षे । रा॰नि॰व॰९ । महाविषकृष्णवृश्चिकभेदे । सु॰कल्प॰८ष॰ । See वृश्चिकः ।

**श्यामलचूड़ा** । स्त्री । रक्तगुञ्जायाम् । লাল-কুঁচ । रा॰नि॰व॰३ ।

**श्यामलता** । स्त्री । श्यामानामलतायाम् । শ্যামা লতা । प॰मु॰ ।

**श्यामला (ली)** । स्त्री । गन्धमूलीनाकन्याम् । रा॰नि॰व॰७ । अश्वगन्धायाम् । रा॰नि॰व,४ । कृष्णकटभ्याम् । रा॰नि॰व॰९ । कस्तूर्य्याम् । মৃগনাভি । रा॰नि॰व॰व॰१२ । जम्बूवृक्षे । জাম গাছ । रा॰नि॰व॰११ ।

**श्यामलालः** । पुं । सङ्केपरखावलीकारे ।

**श्यामलालुः** । पुं । नीलालुके । নীল আলু । रा॰नि॰व ७ ।

**श्यामलिका** । स्त्री । नील्याम् । নীলগাছ । रा॰नि॰व॰४ ।

**श्यामलेक्षुः** } **श्यामवंशः** } पुं । कृष्णेक्षौ । কাজলি ইক্ষু । रा॰नि॰व॰१४ ।

**श्यामवीजम्** । कालादानेतिख्याते वनिगद्रव्यविशेषे । কালাদানা । तत्पर्य्यायाः,—श्यामलवीजम् । गुणाः,—"रेचनं श्यामवीजं स्यात् शोफोदरविनाशनं । ज्वरे पुरीषसङ्गे च दारुणे शिरसि गदे । उदावर्त्ते तथानाहे बुधैरेतत् प्रयुज्यते ॥"

**श्यामशालिः** । पुं । कृष्णशालिधान्ये । কাল ধান रा॰नि॰व॰१६ ।

**श्यामसर्पः** । पुं कृष्णसर्पे । चि॰क्र॰क॰१ग॰ ।

**श्यामा** । स्त्री । हृष्टार्त्तवायां मध्यमस्त्रियि । रा॰नि॰व॰१८ । प्रियङ्गौ । रा॰नि॰व॰१२ । च॰द॰वा॰व्या॰चि॰ फकादशशतीमहाप्रसारणीतैले । कृष्णायाम् । গুলঞ্চ । रा॰नि॰व॰३ । कृष्णमूलत्रिवृतायाम् । কাল তেউড়ী । मे॰ । रा॰नि व॰६ । सु॰सू॰३८ष॰ । पिप्पल्याम् । वै॰नि॰ज्व॰चि॰ कल्याणघृते । वा॰व्या॰ चिकशूलचि॰ । हरिद्रायाम् । रा॰नि॰व॰६ । वन्दायां । বান্দড়া । नीलपुनर्नवायां । रा॰नि॰व॰५ । नीलदूर्व्वायां । रा॰नि॰व॰८ । तुलसीवृक्षे । पद्मवीजे । रा नि॰व॰१० । नीलिन्याम् । নীল । रा॰नि॰व॰४ । पक्षिविशेषे । শ্যামা পাখী । रा॰नि॰व॰२३ । कस्तूर्य्यां । মৃগনাভি । गोरोचनायाम् । रा॰नि॰व॰१२ । कृष्णसारिवायां । रा॰नि॰व॰२३ । सोमलतायाम् । गुन्द्रायाम् । গড়গড়ে । विश्व॰ । लताकस्तूर्य्यां । अनन्तमूल्यां । তিৎপুষ্পী । प॰मु॰ । वृद्धदारके । भा॰ । "काकजङ्घा बला श्यामा ।" च॰द॰ज्व॰चि॰चा॰वा॰चि॰ अलम्बुषाद्यचूर्णे । सु॰सू॰४४अ॰ । शिंशपावृक्षे । শিশু গাছ । रा॰नि॰व॰९ । वाकुच्याम् । সোমরাজ । गुग्गुलौ । मे॰ । श्वेतसारिवायाम् । भा॰पू॰१भ॰ । अनन्तमूलि । भैष॰खदिरवट्यां॰ हृद्रुक्पमुलादवैद्ये । हरीतक्यां । वै॰निघ॰२भ॰अप॰चि॰ चन्दनादि॰ अवलेहे । वा॰व्या॰चि॰एरण्डपाके । कोकिलायाम् । विश्व॰ ।

**श्यामाकः** । पुं । स्वनामख्याततृणधान्ये, कुधान्ये वा । শ্যামাধান । तत्पर्य्यायाः,—श्यामः श्यामकः त्रिबीजः अविप्रियः सुकुमारः राजधान्यं तृणबीजोत्तमः । क्षुद्रधान्ये । अवि॰ । गुणाः—शोषणो रूक्षः वातलः कफपित्तजित् । भा॰पू॰१भ॰धा॰व॰ । "श्यामाकः शोषणो रूक्षो वातलः कफवारणः ।" अवि॰१५अ॰ । तदन्नगुणाः—"श्यामाकभक्तो रुचिदो लघूरुचय दीपनः । बलवातकरो मेहगलरुङ्मूत्रकृच्छ्रहा ॥" वै॰निघ॰ । "सकोरदूषः श्यामाकः कषाय मधुरो लघुः ।" वातलः कफपित्तघ्नः शीतसङ्ग्राहिशोषणः ॥" च॰सू॰२७अ॰ ।

**श्यामाङ्गी** । स्त्री । नीलदूर्व्वायाम् । वै॰निघ॰ ।

**श्यामाढ़की** । स्त्री । कृष्णपुष्पाढ़क्याम् । কাল-অড়হর । गुणाः—दीपनी पित्तदाहघ्नी च । रा॰नि॰व॰१६ ।

**श्यामादिवर्गः** । पुं । तदादिद्रव्यगणे । गणोऽयं गुल्मविषहरः आनाहोदरोदावर्त्तादिघ्नश्च । यथा—श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनी तिल्वक-कम्पिल्लकरम्यकक्रमुकपुत्रश्रेणी-गवाक्षीराजवृक्ष-करञ्जद्वय-गुडूचीसप्तलाच्छागलान्त्रीसुधाः सुवर्णक्षीरी चेति । শাদা তেউড়ী, কাল তেউড়ী, দন্তী, যবতিক্তা, লোধ, কমলাগুঁড়ি, পটোল, গুপারি, ইন্দুরকাণী, গোড়ুম্বা, সোন্দাল, করঞ্জ, নাটাকরঞ্জ, গুলঞ্চ, হাতিম, ছাগলবেঁটে, সিজু, খিরুই । सु॰सू॰३८अ॰ ।

**श्यामाम्ली** । स्त्री । नीलाम्लायां । रा॰नि॰व॰४ ।

**श्यामालता** । स्त्री । ( Ichnocarpus fru-

tescens.) कृष्णशारिवायाम्। শ্যামালতা। हिं दुधि। तै नीलतिग। तत्पर्य्यायाः—गोपा गोपी गोपवल्ली सारिवा शारिवा उत्पलशारिवा अनन्ता श्यामा गोपिनी चिह्नधारिणी हृद्वन्धिनी कालपेषी महाश्यामा सुभद्रा दीर्घमूला पालिन्दी मयूरविदला इन्द्रजम्बुकवत्पत्रा सुगन्धा कल-घण्टिका गोपवधूः। कश्चित्। See अनन्ता।

**श्यामावीजम्।** क्ली। हृद्दारकवीजे। र.सा. सं.महेश्वररसे।

**श्यामाह्वा।** स्त्री। पिप्पल्याम्। वै.निघ.।

**श्यामेक्षुः।** पुं। कृष्णेक्षौ। रा.नि.व.१४।

**श्यावः।** पुं। शुक्लानुविद्धकृष्णवर्णे, शाकवर्णे वा। भा.म.१म. आगन्तुज्वरे। "श्यावास्यता विपकृते।" कर्णपालीगतरोगे। सु.सू.१६श.। मन्दविषवृश्चिक-भेदे। सु.कल्प.८म.।

**श्यावतैलम्।** क्ली। कर्पूरतैले।

**श्यावदन्तः (कः)।** पुं। दन्तगत-मुखरोगे। लक्षणं—"योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्व-शेषतः। श्यावतां नीलतां वापि गतः स श्याव-दन्तकः॥" सु.नि.१६श.।

**श्याववर्त्म (न्)।** क्ली। नेत्रवर्त्मगतरोगे। लक्ष-णम्—"यद्वर्त्म बाह्यतोऽन्तश्च श्यावशून सवेदनम्। दाहकण्डूपरिक्लेदि श्याववर्त्मेति तन्मतम्॥" सु. उ.३श.।

**श्यावास्यता।** स्त्री। मुखकृष्णतायाम्। निदा.।

**श्येतकोलकः।** पुं। (Yprinus saphore.) मत्स्यविशेषे। পুঁটীমাছ। हारा.।

**श्येनः।** पु। प्रसहजातीयपक्षिविशेषे। সঞ্চান, শ্যেন,শিক্রে বা বাজ। काकसमगुणः सु.सू.४६श.।

**श्येनघण्टा।** स्त्री। दन्तीवृक्षे। रा.नि.व.६।

**श्येनाहृतः।** पु। सोमलतायाम्। वै.निघ.।

**श्येनी।** स्त्री। श्येनस्त्रियाम्। মাদি বাজ পাখী। शब्दकल्प:।

**श्योणा(ना)कः।** पु। (Calosanthes Indica, or Oroxylum Indicum. Syn. Bignonia Indica.) स्वनामख्यात वृक्षे। শোণা গাছ। हि सोनापाठा, अलु। मं टेण्टुः। उत्. फणफणा। पञ्जा. मुलिन्। नेपा. करुमकन्द। ता. पन। तत्पर्य्यायाः,—मण्डूक-पर्णः पत्रोर्णः नट. कट्वङ्गः टुण्टुकः शुकनाशः ऋक्षः दीर्घवृन्तः कुटन्नटः शोनकः अरलः अरलुः स्योणाकः विपनुत् अध्वान्तशात्रवः ध्वान्तशात्रवः पूतिवृक्षः मण्टुकः मण्डुकः भूतपुष्पः शोणः अरटुः बटुः स्वर्णवल्कलः पृथुशिम्बः शल्लकः शोफघ्नः कटम्भरः मयूरजङ्घः प्रियवीजः। तद्भेदस्य पर्य्यायाः,—पृथुशिम्बः भल्लकः दीर्घवृन्तकः टेन्टुकः पीतवृक्षः भूतसारः सुनिद्रुमः निःसारः फलवृन्ताकः पूतिपत्रः वसन्तकः मण्डूकपर्णः जम्बूकः पीतकः पीतपादपः पीताङ्गः वातारिः शोणः कुनटः विरोचनः अम रेष्टः लङ्कनेत्रः। गुणाः—शीतलः त्रिदोषघ्नः पित्त-श्लेष्मातिसारघ्नः सन्निपात-ज्वरघ्नश्च। एतत्फल-गुणाः—कटूष्णं कफवातहरं लघु दीपनं पाचनं हृद्यं रुचिकृत् लवणसारञ्च। रा.नि.व.९। अपिच—"टुण्टुकस्य फलं बालं रुक्षं वातकफापहं। हृद्यं कषायं मधुरं रोचनं लघु दीपनम्। गुल्मार्शः कृमि-हृत् प्रौढ़ं गुरु वातप्रकोपनम्॥" भा.। च.सू.४म अनुवासने। लोध्रे। वै.निघ.।

**श्रपितम्।** त्रि। पक्वे। पाचिते। घृतदुग्धजल-भिन्नपक्वद्रव्ये। यथा—"अन्यत्तु श्रपितं श्राणं समु-दन्तोद्धृते समे।" जटा.।

**श्रपिता।** स्त्री। काञ्जिके। शब्दकल्प.।

**श्रमः।** पुं। चिकित्सायाम्। रा.नि.व.२०। चित्त-खेदे। सु.शा.३म.। श्रान्तौ। "श्रमोऽरतिर्विवर्ण-त्वम्"। मा.नि.।

**श्रमणा।** स्त्री। सुदर्शनायाम्। উন্নতি পূরতি, পদ্মগুলঞ্চ। मुण्डीर्य्याम्। মুণ্ডীরী। मांस्याम्। জটামাংসী। मे.।

**श्रमभञ्जिनी।** स्त्री। नागवल्लीलतायाम्। তাম্বূলী। नि।

**श्रवः (स्)।** पुं। श्रवणेन्द्रिये। কাণ। रा.नि. व.१८। अम.।

**श्रवणम्।** क्ली। श्रवणेन्द्रिये। रा.नि.व.१८।

**श्रवणविभ्रमः।** पुं। अन्यथाश्रवणे। ভুল শোণা। वैद्यकम्।

**श्रवणशीर्षिकः (का)।** पुं, स्त्री। श्रावणी-नाममहाक्षुपे। মুণ্ডীরী। रा.नि.व.।

**श्रवणा (णी)।** स्त्री। प्रपौण्डरीकनामगन्ध-द्रव्ये। পুণ্ডরিয়া। रा.नि.व.१२। श्रावण्याम्। মুণ্ডীরী। रा.नि.व.५। मुण्डीरीभेदे। प.मु.। See कदम्बपुष्पी।

**श्रवणाह्वया (ह्वा)।** स्त्री। निर्विषीतृणे। घास्'विशेष। कच्छटे। কাঁচড়া। सु.सू.३९ष.।

**श्राणम्।** क्ली। पक्के। मे.। घृतजलदुग्धमिश्रपक्वद्रव्ये। जटा.। स्त्री (णा)। यवाग्वाम्। জাউ। प.मु.।

**श्रान्त:।** त्रि। श्रमपीड़िते।

**श्राद्धशाकम्।** क्ली। कालशाके। কালকাসন্দা। नाड़ीचशाके। वै.निघ.। भा.पू.१भ.शा.व.।

**श्रान्तोपचार:।** पुं। अश्वस्य श्रान्तौ उपचारविधाने। ডলাই মলাই। ज.द.।

**श्राव:।** पुं। श्रीवासे। গন্ধবৃক্ষের আটা, তার্পিণ। भा.।

**श्रावक:।** पुं। काके। त्रिका.।

**श्रावणा।** स्त्री। दध्यालीवृक्षे। দয়ে'ষয়ে'গাছ। मे.। भूकदम्बे। কোকশিমা। व.गुड़चीतैले।

**श्रावणी।** स्त्री। मुण्डीर्य्याम्। क्षुद्रमुण्ड्याम्। মুণ্ডীরী। সুঁ ছোটোমুণ্ডী। तत्पर्य्याया:,—मुण्डितिका भिक्षु: श्रवणशीर्षका श्रवणा प्रव्रजिता परिव्राजि तपोधना। गुणा:—कषाया कटुरुष्णा कफपित्तघ्नी आमातीसार कासघ्नी विषच्छर्द्दिघ्नी च। रा.नि.व.५। महामुण्डीक्षुद्रमुण्डीतुल्यगुणा। भा.। See अलम्बुषा। रक्तमुण्डीर्य्याम्। च.चि.३अ.। महौषधौ। See औषधिवर्ग:। सु.चि.३०ष.। वृद्धौ। वा.सू.१५ष। भूकदम्बे। च.वि.८ष.। ऋद्धौ। वै.निघ.।

**श्रावणीद्वयम्।** क्ली श्रावणी महाश्रावण्यौ:। च.वि.२य.।

**श्रावा।** स्त्री। अन्नमण्डे। प.मु.।

**श्रावी (इन्)।** पं। सर्ज्जिकाचारे। सु.सु.।

**श्री:।** स्त्री। लक्ष्म्याम्। विल्ववृक्षे। বেল গাছ। रा.नि व.२३। वै.निघ.अ.सा.चि.। कुटजाद्यचूर्णे। लवङ्गलतायाम्। नकुल.१२अ.। कमले। पद्मे। रा.नि.व.१०। सरलवृक्षे। ग.। ऋद्धौ। रा.नि.व.५। नवनीतखोटौ। सु.चि.२२ष.। च.द.वा.व्या.चि. एलादितैले। उपकरणे। मे.।

**श्रीकण्ठ:।** पुं। वैद्यहितोपदेशकारे। कुसुमावलीटीकाकारे च।

**श्रीकन्दा।** स्त्री। बन्ध्याकर्कोटक्याम्। তিৎকাঁকড়ী। रा.नि.व.३।

**श्रीकरम्।** क्ली। रक्तोत्पले। त्रिका.। पुं। शालवृक्षे। वै.निघ.।

**श्रीकारी (इन्)।** पुं। मृगविशेषे। तत्पर्य्याया:,—शिखियूप: कुरङ्ग: महानव: जवन: वेगिहरिण: नद्दाल: नाड्डिकाह्वय:। तन्मांसगुणा:—लघु हृद्यं बलकरञ्च। रा.नि.व.१९।

**श्रीकुक्कुट:।** पुं। तिलसर्षपपिण्याकजे मालवदेशप्रसिद्धे अम्लखड़कविशेषे। स च प्रमेहे हित:। वा.चि.१२अ.।

**श्रीखण्ड:।** पुं। हरिचन्दने। प.मु.। वेट्टसुक्कड़िभेदेन तद्द्विविधम्। तयो: वेट्टं सार्द्रं विच्छेदं, अन्यत् स्वयंशुष्कमिति। तदुक्तं—"चन्दनं द्विविधं प्रोक्तं वेट्टसुक्कड़िसंज्ञितम्। वेट्टन्तु सार्द्रं विच्छेदं स्वयं शुष्कन्तु सुक्कड़ि॥" गुणा:—कटु तिक्त-शीतलं कषायं पित्तश्रान्तिवमिज्वरक्रमितृष्णासन्तापहरं वृष्यं मुखरोगघ्नं कान्तिकरं गात्रे लिप्त निद्रादिजनकञ्च। रा.नि.व.१२। See चन्दनम्।

**श्रीगन्धम्।** क्ली। श्वेतचन्दने। वै.निघ.२भ. दाह.चि.पुनर्नवातैले।

**श्रीग्रह:।** पुं। पक्षिपानीयशालायाम्। .हारा.।

**श्रीघनम्।** क्ली। दधनि। जटा.।

**श्रीचन्दनम्।** क्ली। श्वेतचन्दने। वै.निघ.२भ. अप.चि.द्राक्षावलेहे।

**श्रीचमरी।** स्त्री। चमरीमृगे। वै.निघ.।

**श्रीतरु:।** पुं। शालवृक्षे। वै.निघ.।

**श्रीताल: (ली)।** पुं, स्त्री। मलियादेशप्रसिद्धे तालसदृशवृक्षे। श्रीताल इति लोके। তেরেট। तत्पर्य्याया:,—मृदुच्छद: मृदुताल: लक्ष्मीताल: विशालपत्र: लिखार्ह: मसीलिख्यदल: याम्योद्भूत:। गुणा:—मधुर: शीत: ईषत्कषाय: पित्तघ्न: कफकर: ईषद्वातप्रकोपनश्च। रा.नि.व.११। नकुल.१६अ.।

**श्रीधात्री।** स्त्री। शिरामलके। শির-আমলা। "अपुष्पवत्या: श्रीधात्र्या:।" रस.कौ.महाम्रतग्रहणय-रसे।

**श्रीनिकेत: (तम्)।** पुं, क्ली। नवनीतधूपे, सरलनिर्यासे। তার্পিন্। सु.चि.९ष.। रक्तपद्मे। सुवर्णे। वै.निघ.।

**श्रीनिवासक:।** पुं। कुरण्टकवृक्षे। ঝাঁটী গাছ। वै.निघ.वा व्या.चि.।

**श्रीपदी।** स्त्री। वार्षिकीमल्लिकायाम्। বেল-ফুল। भा।

**श्रीपर्णम्।** क्ली। क्ली। पद्मे। रा.नि.व.१०। पुं। अग्निकारिकायाम्। গণিরী। अम.। च.चि.८अ.।

**श्रीपर्णिका(र्णी)।** स्त्री। कट्फलवृक्षे। रा.नि.व.९। गाम्भारीवृक्षे। प.मु.। अम.। च.चि.१अ.। वा.चि.१अ.। "श्रीपर्णीफलशीतकषायः।" भा.म.१भ. रक्तष्ठीवीज्व.चि.। भैष.छर्दी.चि.। अग्निकारिकायाम्। গণিয়ারী। रा.नि.व.९। शाल्मलीवृक्षे। हे.च.। पृश्निपर्ण्याम्। र.मा.। शालपर्ण्याम्। ध.निघ.२भ. संग्रहग्रहणी चि. नागरादिकषाये।

**श्रीपर्णीतैलम्।** क्ली। स्तनदार्ढ्यकरं तैलम्। पाठः—"श्रीपर्णीरसकल्काभ्यां तैलं सिद्धं स्तनोपरि। तूलकेन धृतं कुर्य्यात् पतितावुत्थितौ स्तनौ॥" श्रीपर्णी गाम्भारी तस्याः त्वचो रसः। अभावे अष्टांशशिष्टः क्वाथः। रस.र.।

**श्रीपिष्टः।** पुं। सरलवृक्षनिर्य्यासे। তার্পিন্। श.टी.रा.मा.। लवणखोर्य्याम्। क्वचित्।

**श्रीपुत्रः।** पुं। घोटके। त्रिका.। अश्वत्थवृक्षे।

**श्रीपुष्पम्।** क्ली। लवङ्गे। रा.नि.व.२२। प्रपौण्डरीके। পুণ্ডরিয়া। रा.नि.व.१२। ज.द.। पद्मकाष्ठे। र.मा.। श्वेतपद्मे। च.द.मुखरो.चि.बृहत्खदिरवट्याम्।

**श्रीपुष्पमञ्जरी।** स्त्री। प्रपौण्डरीके। পুণ্ডরিয়া। रा.नि.व.१२।

**श्रीप्रसूनकम्।** क्ली। लवङ्गे। वै.निघ.।

**श्रीफलः।** पुं। बिल्ववृक्षे। राजादनीवृक्षे। ক্ষীর্নী গাছ। रा.नि.व.११। भा.म.१भ.। "श्रीफलः सर्व्वतोभद्रा।" क्ली। बिल्वफले। र.मा.। वा.चि.१अ.। "श्रीफलैः कृतम्।" आमलके वै.निघ.। आर्द्रचिक्कणपूगे। কাঁচা চিক্‌নি। रा.नि.व.२३। स्त्री (ला)। नीलीवृक्षे। নীল গাছ। रा.नि.व.४। क्षुद्रकारवेल्ल्याम्। উচ্ছে। रा.नि.व.३। आमलक्याम्। रा.नि.व.११।

**श्रीफलशलाटुः।** पुं। बिल्वशलाटौ। বেলশুঁঠ। सा.क्री.ग्रहणी. चि।

**श्रीफलिका।** स्त्री। क्षुद्रकारवेल्ले। ক্ষুদ্রকরেলা। रा.नि.व.३। महानीलीवृक्षे। रा.नि.व.४।

**श्रीफली।** स्त्री। आमलक्याम्। আমলা গাছ। रा.नि.व.११। नील्याम्। নীল গাছ। मे.। महाज्योतिष्मती-लतायाम्। বড় লতাফট্‌কী। रा.नि.व.३।

**श्रीबाहुशालगुडः।** पुं। अर्शोऽधिकारे पक्वगुडः। क्वाथार्थं—त्रिवृत् चवी दन्ती गोक्षुरं चित्रकं शटी इन्द्रवारुणी शुण्ठी मुस्तकं विडङ्ग हरीतकी एषां प्र. ८ तो. भल्लातकं ६४ तो वृद्धदारकबीजं ४८ तो ओलं १२८ तो. जलं १२८ श. शे. ३२ श.। गुडः ३८४ तो १२३ पल वा। प्रक्षेपद्रव्यं—त्रिवृच्चूर्णं चविचूर्णम् ओलचूर्णं चित्रकामूलचूर्णम् एषां प्र. १६ तो. एला गुड़त्वक् मरिचं नागकेशरम् एषां चूर्णं प्र. ४८ तो.। তেউড়ী, চই, দন্তী, গোক্ষুর, চিতামূল, শটী, রাখালশশা, শুঁট, মুতা, বিড়ঙ্গ, হরীতকী প্রত্যেক ৮ তো. ভল্লাতক ৬৪ তো. বৃদ্ধদারকবীজ ৪৮ তো. ওল ১২৮ তো. জল ১২৮ শ. শে. ৩২ শ.। গুড় ৯৮৪ তো. বা ১২৩ প.। প্রক্ষেপদ্রব্য—তেউড়ীচূর্ণ, চইচূর্ণ, ওলচূর্ণ, চিতামূলচূর্ণ প্রত্যেক ১৬ তো. এলাইচ, গুড়ত্বক্, মরিচ ও নাগেশ্বরচূর্ণ প্রত্যেক ৪৮ তো। च.द.। भा.।

**श्रीबीजः।** पुं। तालवृक्षे। वै.निघ.।

**श्रीभद्रः।** पुं। मुस्तायाम्। श.र.।

**श्रीभ्राता।** पुं। घोटके। रा.नि.व.१९।

**श्रीमञ्जरी।** स्त्री। तुलसीवृक्षे। वै.निघ.।

**श्रीमत्।** क्ली। तिलपुष्पे। वै.निघ.। स्त्री (ती)। मुण्डीर्य्याम्। মুণ্ডীরী। वै.निघ.।

**श्रीमदनानन्दमोदकः।** पुं। ध्वजभङ्गे औषधम्। यथा—पारदस्य १ भ. गन्धकस्य १ भ. लौहस्य १ भ. अभ्रस्य ३ भ. कर्पूरस्य जटामांस्याः सैन्धवस्य आमलक्याः एलायाः शुण्ठ्याः मरिचस्य पिप्पल्याः जैत्र्याः जातीफलस्य तेजपत्रस्य लवङ्गस्य जीरकस्य कृष्णजीरकस्य यष्टिमधुनः वचायाः हरिद्रायाः कुष्ठस्य देवदारोः हिज्जलबीजस्य टङ्कणस्य भार्ग्याः शुण्ठ्याः नागकेशरस्य कर्कटशृङ्ग्याः तालीशपत्रस्य चित्रकस्य द्राक्षायाः दन्तीबीजस्य वाट्यालकस्य गोरक्षतण्डुलीयस्य त्वचः धान्यकस्य गजकणायाः शुण्ठ्याः बालकस्य मुस्तकस्य गोक्षुरबीजस्य ह्रीबेरस्य प्रसारण्याः भूकुष्माण्डस्य शतमूल्याः अर्क-

मूलस्य वानरीबीजस्य वृद्धदारकबीजस्य शक्राशन-बीजस्य च चूर्णं प्रत्येकं १ तो॰ एकत्र शतावर्य्या रसेन मर्द्दयित्वा संशोष्य पुनश्चूर्णयेत्। अथ सर्व्व-चूर्णचतुर्थांशं शाल्मलीचूर्णं मिश्रयेत्। एतत्सर्व्वार्द्धं शक्राशनचूर्णं मिश्रयित्वा छागीदुग्धेन मर्द्दयेत्। अथ सर्व्वचूर्णद्विगुणाः शर्करा गृहीत्वा छागीदुग्धेन पाच्यः। पाकसिद्धौ त्वगेलापत्रकेशरकर्पूरसैन्धव-त्रिकटुचूर्णं यथासम्भवं प्रक्षिप्य घृतं मधु च यथा-वश्यक मिश्रयेत्। भैष॰ध्वजभङ्ग।

**श्रीमलापहा।** स्त्री। भूमपत्रायाम्। (दोक्ता ढामाक। रा॰नि॰ व॰५।

**श्रीमस्तकः।** पुं। रक्तेष्टालुके। राङ्गा आलू। रसोने। विका॰।

**श्रीमान्।** पुं। तिलकवृक्षे। तिलगाछ। अम॰। अश्वत्थवृक्षे। रा॰नि॰व॰११। ऋषभके। ऋषभक। हरिद्रावृक्षे। वै॰निघ॰।

**श्रीमुखः।** पुं। शारीरकग्रन्थकारे।

**श्रीरसः।** पुं। श्रीवेष्टे। सरलनिर्य्यास, तार्पिन्। रा॰नि॰व॰१२।

**श्रीलता।** स्त्री। महाज्योतिष्मती-लतायाम्। रा॰नि॰व॰३।

**श्रीवल्ली।** स्त्री। स्वनामख्यातकण्टकवृक्षे। मं सौगेयवल्ली। कं श्रीवल्ली। तत्पर्य्यायाः,—कण्ट-वल्ली शिववल्ली शोवल्ली अम्ला कटुफला दुरारोहा। गुणाः—कटुरम्ला वातशोफकफघ्नी। तत्फलं तैल-लेपघ्नम् रुचिकरञ्च। रा॰नि॰व॰८। वार्षिकी-मल्लिकाभेदे। रा॰नि॰व १०।

**श्रीवाटा (टी)।** स्त्री। नागवल्लीविशेषे। पान-गाछविशेष। मं सिरिवाड़ीपान। कं सिरि-वाड़िवेलि। रा॰नि॰व॰११। See नागवल्ली।

**श्रीवार(स)कः।** पुं। शितावरशाकक्षुपे। शुशुनि शाक। रा॰नि॰व॰४। भा॰पू॰१भ॰।

**श्रीवासः (कः)।** पुं। सरलनिर्यासे, सरल-द्रवरसे। तार्पिन् इति भाषा। तत्पर्य्यायाः,—पायसः वृकधूपः श्रीवेशः चीवेटः श्रीपिष्टः सरल-द्रवः रक्तशीर्षकः रसाढ्यः दैत्यपर्णी पद्मदर्शनः यासः यवासः घृताढ्यः दध्याढ्यः चीराढ्य, चोर्य्यः वायसः। रा॰नि॰व॰१२। लवणस्रोटीति। च॰द॰ वा॰व्या॰चि॰। एकादशशतीक-महाप्रसारणीतैले। वा॰म॰१५ष॰ एलादिः। गुणाः—"श्रीवासो मधुर-तिक्तः स्निग्धोष्णस्तुवरः सरः। पित्तलो वात-मूर्द्धाक्षिस्वररोगकफापहः। रक्षोघ्नः स्वेददौर्गन्ध्य-यूकाकण्डूव्रणप्रणुत्॥" भा॰। 'श्रीवासः सरलं पूतिः क्षुन्दुरश्च त्रिपर्णिकं। सिह्लकः परमा मांसी देवदारु सुरा नखम्। सर्व्वेऽमी परमाख्याश्च रक्षोघ्ना ज्वरनाशनाः ... ॥" राज॰। गुग्गुलौ। भा॰उ॰ वाजी॰। "श्रीवासो गुग्गुलुस्तथा।" देव-दारौ। देवदारु गाछ। भैष॰ने॰रो॰चि॰। "श्रीवासो भद्रकः शीतोऽमलकाद्यविवर्जितः।" भैष॰। धूपे। विका॰।

**श्रीवाससारः।** पुं। कपित्थपर्णीवृक्षनिर्य्यासे। शक्रविद्रुमा। तद्गुणाः—"श्रीवाससारः कफनुत् मूत्रलो ज्वरसंहरः। शोफविस्रापनो लेपात् क्रिमि-हृद् वेदनापहः॥"

**श्रीवासाः (स्)।** पुं। सरलद्रवे। अ॰टी॰।

**श्रीवृक्षः (कः)।** पुं। अश्वत्थवृक्षे। हे॰च॰। बिल्ववृक्षे। शब्दकल्प॰।

**श्रीवेष्टः (कः)।** पुं। सौराष्ट्रदेशे प्रसिद्धे स्वनामख्यातसुगन्धवृक्षे। सरल वृक्ष। सु॰सू॰३८ष, एलादौ। सरलनिर्य्यासे। तार्पिन्। तत्पर्य्यायाः,—वृक्षधूपः पिशागन्धः रसायकः श्रीवासः श्रीरसः वेष्टः वेष्टकः वेष्टसारः रसावेष्टः लक्ष्मीवेष्टः चीरशौर्य्यः सुधूपकः धूपाङ्गः तिलपर्णः सरलाङ्गः। गुणाः—कटुः तिक्तः कषायः पित्तघ्नोऽपहरः योनिदोषाजीर्ण व्रणाश्मानहरश्च। रा॰नि॰व॰१२। सु॰चि॰२२अ॰। नवनीतखोट्याम्। च॰सू॰४1५ष॰। च॰द॰वा॰र॰चि॰ कुष्ठाद्यतैले। गुग्गुलौ। सु॰सू॰२१अ॰।

**श्रीवेष्टफलम्।** क्ली। सरलवृक्षफले। वै॰निघ॰ २भ॰ शीताङ्ग-सन्निपातज्व॰चि॰।

**श्रीसंज्ञम्।** क्ली। लवङ्गे। अम॰। भा॰उ॰वाजी॰। "श्रीसंज्ञपुष्पैः समम्।"

**श्रीसम्पदा।** स्त्री। ऋद्धौ। रा॰नि॰व॰५।

**श्रीहर्षसूरिः।** पुं। योगचिन्तामणिकारे।

**श्रीहस्तिनी।** स्त्री। हस्तिशुण्ड्याम्। हाति-शुँड़े। जटा॰।

**श्याह्वः।** पुं। नवनीतखोटी। मक्खन-खाटी। च॰सू॰५ष॰। च॰द॰कुष्ठ॰चि॰।

**श्रुग्वारुः।** पुं। विकङ्कतवृक्षे। .वैंइंची गाछ। र॰मा॰।

**श्रुघ्निः (घ्नी)**। स्त्री। सर्जिकाक्षारे। সাজিমাটী। "श्रुघ्निः श्रुघ्नी यवक्षारः।" र.मा.। सु.चि.२० अ. अजगल्लि. चि.।

**श्रुतश्रेणी**। स्त्री। द्रवन्तीवृक्षे। ইন্দুরকাণী। भा.। गुणाः—चक्षुष्या कटु आखुविषापहा व्रण-वामयहिता। रा.नि.व.४।

**श्रुतिः**। स्त्री श्रवणेन्द्रिये। কাণ। रा.नि.व.१८। स गर्भस्य पञ्चमे मासि भवति। सुखबोधः।

**श्रुतिकटः**। पुं। सर्पे। मे.।

**श्रुतिमूलम्**। क्ली। कर्णमूले। संग्रहः।

**श्रुतिवर्जितः**। त्रि। बधिरे। जटा.।

**श्रुतिवेधः**। पुं। कर्णवेधे। शब्दकल्पः।

**श्रुतिसारः**। पुं। वैद्यकग्रन्थभेदे।

**श्रुतिस्फोटा**। स्त्री। कर्णस्फोटालतायाम्। কাণছিড়া। रा.नि.व.३।

**श्रुवः**। पुं। मनुष्यस्य शिरोऽधः केशान्तभागे। अ.द.२ अ.। स्त्री (वा)। मूर्व्वायाम्। रा.नि.व.३।

**श्रुवावृक्षः**। पुं। विकङ्कतवृक्षे। বঁইচী গাছ। रा.नि.व.११।

**श्रेणिका**। स्त्री। निःश्रेणिकातृणे। रा.नि.व.८।

**श्रेणिः (णी)**। स्त्री। लाजमण्डे। খৈয়ের মণ্ড। प.मु.। समानशिल्पसंहतौ। কোম্পানি। मे.। सेकपात्रे। विश्व.।

**श्रेणिवला**। स्त्री। निःश्रेणिकातृणे।

**श्रेयः**। पुं। जीवके। वै.निघ.।

**श्रेयसी**। स्त्री। हरीतक्याम्। भा.पू.१भ.। रा.नि.व.११। वै.निघ. दाह.चि. पित्तकादिलेहे। गजपिप्पल्याम्। भा.पू.१भ. वृहत्सैन्धवाद्यतैले। अग्निमुखचूर्णे च। सि.यो.वृहत्पञ्चगव्यघृते। सर्व्व-ज्वरहरलौहे। भैष.शोथचि. शोथकालानलरसे। पाठायाम्। আকনাদি। रा.नि.व.६। रास्ना-याम्। विश्वः। च.सू.४अ.। भा.वातश्लेष्म.चि. वृहत्पिप्पल्यादौ। "श्रेयसी सुरसाऽऽभा।" प्रियङ्गौ। रा.नि.व.१२।

**श्रेष्ठम्**। क्ली। गोदुग्धे। त्रिका.। पुं। श्वेत-खदिरे। प.मु.।

**श्रेष्ठकाष्ठः**। पुं। शाकवृक्षे। সেগুন গাছ। रा.नि.व.९।

**श्रेष्ठमल्लिका**। स्त्री। शतदलमल्लिकायाम्। प.मु.।

**श्रेष्ठलवणम्**। क्ली। सैन्धवलवणे। वै.निघ.।

**श्रेष्ठवृक्षः**। पुं। वटवृक्षे। रा.नि.व.९। कृष्णा-गुरुवृक्षे। वै.निघ.। [वै.निघ.।

**श्रेष्ठवेधिका**। स्त्री। कस्तूर्याम्। মৃগনাভি।

**श्रेष्ठव्रीहिः**। पुं। षष्टिकशालौ। ষেটে ধান। वै.निघ.।

**श्रेष्ठा**। स्त्री। स्थलपद्मिन्याम्। স্থলপদ্ম। रा.नि.व.५। मेदायाम्। वै.निघ.२भ. अर्शः चि.सूरण-मोदके। त्रिफलायाम्। वा.चि,१२अ.।

**श्रेष्ठाम्बु**। क्ली। तण्डुलोदके। চেলুনি জল। वा.उ.३७अ.।

**श्रेष्ठाम्लम्**। क्ली। वृक्षाम्ले। रा.नि.व.६।

**श्रोणः**। त्रि। खञ्जे। अम। स्त्री (णा)। काञ्जिके। शब्दकल्पः।

**श्रोणिः (णी)**। स्त्री। नितम्बे। रा.नि.व.१८। सा गर्भस्य मासद्वयेन भवति। सुखबोधः। (णी) अग्निमन्थक्षुपे। গণিয়ারী। वै.निघ.।

**श्रोणिफल (कं,म्)**। क्ली। वरस्त्रीणां प्रशस्त-नितम्बे। নিতম্বাভোগ। रा.नि.व.१८। अम.।

**श्रोणिफलकास्थि**। क्ली। नितम्बाभोगास्थनि। तानि चत्वारि। च.शा.७अ.।

**श्रोतः (स्)**। क्ली। कर्णे। त्रिका.। इन्द्रिये। हे.च.। शिरायाम्। सु.।

**श्रोतोजम्**। क्ली। सौवीराञ्जने। रा.नि.व.१३।

**श्रोतोद्भवम्**। क्ली। श्रोतोऽञ्जने। रा.नि.व.१३।

**श्रोत्रम्**। क्ली। श्रवणेन्द्रिये। रा.नि.व.१८।

**श्रौत्रम्**। क्ली। श्रवणेन्द्रिये, कर्णे। अम.।

**श्राद्धः**। पुं। नवनीतखोट्याम्। च.सू.२अ. प्रदेहे। क्ली। फसले। शब्दकल्पः।

**श्लक्ष्णः**। त्रि। मसृणे, चिक्कणे। "श्लक्ष्णः स्नेहं विनापि स्यात् कठिनोऽपि हि चिक्कणम्॥"

**श्लक्ष्णकम् (का)**। क्ली, स्त्री। पूगफले। रा.नि.व.११। (का) कृष्णापराजितायां। वै.निघ.।

**श्लक्ष्णत्वक्**। पुं। अश्मन्तकवृक्षे। আপটা। रा.नि.व.९।

**श्लीपदम्।** क्ली। पादरोगविशेषे। गोद। तत्पर्य्याया:,—पादवल्मीकम् पदगण्डीरम् श्लीपद: शिलीपद:। निदानं यथा—"कुपितास्तु दोषा वात-पित्त-श्लेष्माणोऽध:प्रपन्ना वङ्क्षणोरुजानुजङ्घा-स्ववतिष्ठमाना: कालान्तरेण पादमाश्रित्य शनै: शोफं जनयन्ति, तत् श्लीपदमित्याचक्षते।" सु. नि.१२अ.। तस्य कारण—"पुराणोदकभूयिष्ठा: सर्व्वर्त्तुषु च शीतला:। ये देशास्तेषु जायन्ते श्लीपदानि विशेषत:॥" लक्षणं यथा—"य: सज्वरो वङ्क्षणजो भृशार्त्ति: शोथो नृणां पादगत: क्रमेण। तत् श्लीपदं स्यात्करकर्णनेत्रशिश्नौष्ठनासास्वपि केचिदाहु:॥" "वातजं कृष्णरूक्षञ्च हि स्फुटितं तीव्रवेदनम्। अनिमित्तरुजञ्चास्य बहुशो ज्वर एव च। पित्तजम्पीतसङ्काशं दाहज्वरयुतं भृशं। श्लैष्मिकन्तु भवेत् स्निग्धं तथापाण्डुरमस्थिरम्। चीण्यप्येतानि जानीयात् श्लीपदानि कफोच्छ्रयात्। गुरुत्वञ्च महत्त्वञ्च यस्मात् नास्ति कफं विना॥" मा.नि.। "पाणि-नासौष्ठ-कर्णेषु वदन्त्येके तु पादवत्। श्लीपदं जायते तच्च देशेऽनूपे भृशं भृशम्॥" वा. उ.२९अ.।

**श्लीपदप्रभव:।** पुं। आम्रवृक्षे। श.मा.।

**श्लीपदापह:।** पुं। पुत्रजीववृक्षे। विका.।

**श्लीष्ट:।** पुं। आम्रवृक्षे। वै.निघ.।

**श्लेष्मक:।** पुं। कफे। श.च.।

**श्लेष्मकोष्ठ:।** पुं। अश्वरोगभेदे। स चाश्वस्य मन्दाहारिणानुमेय:। ज.द.४६अ.।

**श्लेष्मघ्न:।** त्रि। श्लेष्महरे द्रव्ये, तच्च लघुपाकद्रव्यमात्रम्। तीक्ष्णरूक्षविशदगुणभूयिष्ठत्वात् कटु तिक्त कषाय द्रव्यमात्रम्। सु.सू.४१अ.।

**श्लेष्मघ्ना (घ्नी)।** स्त्री। त्रिपुर-मल्लिकायाम्। विका.। केतक्याम्। विश्व.। ज्योतिष्मतीलतायाम्। जटा.। त्रिकटी। त्रिकटू। श.र.।

**श्लेष्मज्वर:।** पुं। कफजन्यज्वरे। लक्षणं यथा—"स्तैमित्यं स्तिमितो वेग: आलस्यं मधुरास्यता। शुक्लमूत्र-पुरीषत्वं स्तम्भस्तृप्तिरथापि च। गौरवं शीतमुत्क्लेश:...... ॥" इत्यादि। निदा.॥

**श्लेष्मण:।** पुं। कफे। तस्य च स्थानं सन्धय:। "तस्य स्थानं सन्धय:, तत्कर्म्म च सन्धीनां संश्लेषणम्।" भा.।

**श्लेष्मधरा।** स्त्री। चतुर्थकलायाम्। या सर्व्वसन्धिषु प्राणभृतां भवति सेत्युच्यते। सु.शा.४अ.।

**श्लेष्मनाडी।** स्त्री। दन्तमूलगतरोगे। मस्तनाली। "ज्ञेया: कफाद् बहुघनार्जुन-पिच्छिलास्रा: सस्रा: सकण्डुरुजा रजनीप्रवृद्धा:।"

**श्लेष्मपाण्डु:।** पुं। श्लेष्मजन्यपाण्डुरोगे। See पाण्डु:।

**श्लेष्मप्रकृति:।** त्रि। कफप्रकृतौ मनुष्ये। तल्लक्षणं—"सुस्निग्धवर्ण: स्थितनेत्रवृत्त: श्याम: सुकेशी नखदीर्घरोमा। गम्भीरशब्द: श्रुतशास्त्रनिद्रातन्द्राप्रिय: तिक्तकटूष्णभोजी। रूक्षाङ्ग: स्निग्धरसप्रियश्च सगीतवाद्योऽतिसहिष्णुशीत:। व्यायामशीलोरसलालसोऽसौ भवेत् कफस्य प्रकृतिर्मनुष्य:॥" ऋवि.५अ.। अपिच.— दृढशास्त्रमति: स्थिरमित्रधन: परिगण्य चिरात् प्रददाति बहु। परिनिश्चितवाक्यपद: सततं गुरुमानकरश्च भवेत् स सदा॥ ब्रह्मरुद्रेन्द्रवरुणै: सिंहाश्वगजगोवृषै:। तार्क्ष्यहंससमानूका: श्लेष्मप्रकृतयो नरा:॥"

**श्लेष्मल:।** त्रि। श्लेष्मप्रकृतौ। अम.।

**श्लेष्मलफल:।** पुं। बहुवारवृक्षे। वै.निघ.।

**श्लेष्मविसर्प:।** पुं। कफजन्यविसर्पे। निदा.।

**श्लेष्मसम्भूत:।** त्रि। श्लेष्मजे। रा.नि.व.२०।

**श्लेष्मस्राव:।** पुं। पुं। नेत्रसन्धिगतरोगविशेषे। लक्षणं—"श्वेतं सान्द्रं पिच्छिलं य: स्रवेच्च श्लेष्मस्रावी नीरुज: स प्रदिष्ट:।" सु.उ.२अ.।

**श्लेष्महः।** पुं। पनसवृक्षे। कांटाल गाछ। वै. निघ.। कट्फलवृक्षे। श.च.।

**श्लेष्महन्त्री।** स्त्री। देवदालीलतायाम्। देयाताड़ा। वै.निघ.।

**श्लेष्मा (न्)।** पुं। शरीरस्थकफे। स च माधुर्य्य-स्नेहगौरवशैत्यपैच्छिल्यगुणलक्षण:। तस्य समानयोनि: मधुरो रस: स माधुर्य्यादिभि: माधुर्य्यादीनि वर्द्धयति। सु.सू.४२अ.। तस्य स्थानमामाशय:। गुणा:—श्लेष्मा श्वेतो गुरु: स्निग्ध: पिच्छिल: शीत एव च। मधुरस्त्वविदग्ध: स्याद्विदग्धो लवण: स्मृत:॥ तत्रामाशय: पित्ताशयस्योपरिष्टात् तत्प्रत्यनीकत्वादूर्द्ध्वगतित्वात्तेजसश्चन्द्र इवादित्यस्य स चतुर्व्विधस्याहारस्याधार:। स च तत्रोदकैर्गुणैराहार: प्रक्लिन्नो भिन्नसङ्घात: सुखजरश्च भवति। माधुर्य्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च। आमाशये सम्भवति श्लेष्मा मधुरशीतल:। स तत्रस्थ

एव स्वप्रभया शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्मणानुग्रहं करोति। उरस्थः त्रिकसन्धीनामात्मवीर्य्येणान्नरससहितेन हृदयावलम्बनं करोति। जिह्वामूलकण्ठस्थः जिह्वेन्द्रियस्य सौम्यत्वात् सम्यग्रसज्ञाने वर्त्तते। शिरःस्थः स्नेहसन्तर्पणाधिकृतत्वात् इन्द्रियाणामात्मवीर्य्येणानुग्रहं करोति। सन्धिस्थस्तु श्लेष्मा सर्व्वसन्धिसंश्लेषात् सर्व्वसन्ध्यनुग्रहं करोतीति॥ सु.सू.२१अ.। चतुर्थी श्लेष्मधरा नाम सर्व्वसन्धिषु प्राणभृतां भवति। "स्नेहाभ्यक्ते यथैवाक्षे चक्रं साधु प्रवर्त्तते। सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा॥" सु.शा.४अ.। "प्राकृतस्तु बलं श्लेष्मा वैकृतो मल उच्यते। स चैवौजः स्मृतः काये स च पाप्मोपदिश्यते॥" च.सू.२०अ.।

**श्लेष्मातः (तः, कः, की)**। पुं, स्त्री। शेलुवृक्षे। চাল্তা গাছ। हिं लसोरा। र.मा.। रा.नि.व.११। भा.। च.सू.४अ.। गुणाः—"गुरु श्लेष्मातकफलं कफकृन्मधुरं हिम।" सु.सू.४६अ.। च.सू.२७अ.।

**श्लेष्माणा**। स्त्री। वृक्षविशेषे। श.मा.।

**श्लेष्मातकसदृशपत्रः**। पुं। पनसवृक्षे। কাঁটাল গাছ। वै.निघ.।

**श्लेष्मान्तकः**। पुं। शेलुवृक्षे। रा.नि.व.११।

**श्लेष्माभिष्यन्दः**। पुं। सर्व्वगताक्षिरोगभेदे। लक्षण—"...ष्यन्दे तु कफसम्भवे। जाड्यं शोफो महान् कण्डुर्निद्रान्नानभिनन्दनम्।_ सान्द्रस्निग्धबहुश्वेतपिच्छावद्दूषिकाश्रुता॥" वा.उ.१५अ.।

**श्लेष्मारः**। पुं। पार्व्वत्यक्षुद्रवृक्षभेदे। 'চা'। तत्पर्य्यायाः,—गिरिभित् यामपर्णी अतन्द्रा। गुणाः,—"श्लेष्मारिपत्र कफहृत् स्वेदन बलमर्द्दनम्। प्रतिश्यायहरं प्रोक्तं ज्वरघ्नं कामदीपनं॥ कामसंहरणं वह्निदीपनं जाड्यनाशनम्॥ क्वाथस्य सितया युक्तः सेव्यो नैरुज्यमिच्छता॥"

**श्लेष्मोल्वणः**। त्रि। श्लेष्माधिके। वा.चि.७अ.।

**श्लैष्मिकः**। त्रि। श्लेष्मसम्भूते। रा.नि.व.२०।

**श्लैष्मिकरक्तपित्तम्**। क्ली। कफजन्यरक्तपित्ते। मा.नि.। See रक्तपित्तम्।

**श्लैष्मिकी**। स्त्री। श्लेष्मजन्ययोनिव्यापदि। लक्षणम्—"कफोऽभिष्यन्दिभिः क्रुद्धः कुर्य्याद्योनिमवेदनाम्। शीतलां कण्डुलां पाण्डुपिच्छिलां तद्विधस्रुतिम्। सा व्यापत् श्लैष्मिकी......॥" वा.उ.३३अ.।

**श्वग्रहः**। पुं। बालग्रहविशेषे। लक्षणं—"कफो हृषितरोमत्वं स्वेदश्चक्षुर्निमीलनं। बहिरायामनं जिह्वादंशोऽन्तःकण्ठकूजनम्। धावन विट्सगन्धत्वं क्रोशनं श्वानवच्छुनि॥" वा.उ.१अ.।

**श्वचिल्ली**। स्त्री। कुक्कुरचिल्लीक्षुपे। কুকুর-শোঁকা। वै.निघ.।

**श्वदंष्ट्रकः**। पुं। गोक्षुरक्षुपे। গোখুরী। रा.नि.व.४।

**श्वदंष्ट्रा**। स्त्री। गोक्षुरे। গোখুরী। र.मा.। सु.सू.१८अ.। च.द.ज्व.चि. ज्वरातिसारे। "श्वदंष्ट्राकण्टकारीभ्यां।" च.सू.४अ.।

**श्वधूर्त्तः**। पुं। शृगाले। श.र.।

**श्वनकः**। पुं। कुक्कुरे। प.मु.।

**श्वनिशम् (शा)**। क्ली, स्त्री। मत्तकुक्कुरनिशायाम्। जटा.।

**श्वपुच्छः**। पुं। वृश्चिके। বিছা। स्त्री (च्छा)। पृश्निपर्ण्याम्। চাকুলিয়া। वै.निघ.।

**श्वफलः**। पुं। चूर्णे। চূণ। बीजपूरे। নেবু-গাছ। र.मा.।

**श्वभीरुः**। पुं। शृगाले। श.मा.।

**श्वभ्रम्**। पुं। क्ली। छिद्रे। अम.।

**श्वयथुः**। पुं। शोथरोगे। रा.नि.व.२०।

**श्वयीचिः (ची)**। स्त्री। रोगे। पीड़ायाम्। व्याक.।

**श्वसनम्**। क्ली। निःश्वासे। मे.। पुं। मदनवृक्ष। प.मु.। वायौ। अम.।

**श्वसनाशनः**। पुं। सर्पे। हारा.।

**श्वसनेश्वरः**। पुं। अर्ज्जुनवृक्षे। श.च.।

**श्वसनोत्सुकः**। पुं। सर्पे। श.च.।

**श्वसितम्**। क्ली। निःश्वासे। हे.च.।

**श्वसुनः**। पुं। वासाली। रा.नि.व.७। चुतवृक्षे। কুকুরশোঁকা। श.च.।

**श्वा (न्)**। पुं, (स्त्री, शुनी)। कुक्कुरे। श.र.।

**श्वादन्तः**। पुं। कुक्कुरदन्ते। व्याक.।

**श्वानः**। पुं। कुक्कुरे। स्त्री (नी)। सारमेयायां। श.र.।

**श्वानचिल्लिका (ल्ली)।** स्त्री। गन्धचिल्ली-शाके। वै.निघ.।

**श्वावल्लिका।** स्त्री। धन्वाके। रा.नि.व ६।

**श्वावित्।** पुं। शल्यके। शल्यकीमृगे। सजारु। भा.। अयं विलेशयगणः। सु.सू.४६अ.। शल्यको-द्भवे। चिका.।

**श्वासः।** पुं। स्वनामख्यातरोगविशेषे। हाँपानि। तस्य निदान—"यैरेव कारणैर्हिक्का बहुभिः सम्प्रवर्त्तते। तैरेव कारणैः श्वासो घोरो भवति देहिनां। विहाय प्रकृतिं वायुः प्राणोऽथ कफसंयुतः। श्वासयत्यूर्द्ध्वगो भूत्वा तं श्वासं परिचक्षते॥" स पञ्चविधः। यथा—"महोर्द्ध्वच्छिन्न-तमकक्षुद्रभेदैश्च पञ्चधा। भिद्यते स महाव्याधिः श्वास एको विशेषतः॥" पूर्ब्बरूपं यथा—"प्राग्रूपं तस्य हृत्पीड़ा शूलमाध्मानमेव च। आनाहो वक्त्र-वैरस्यं शङ्खनिस्तोद एव च। यदा स्रोतांसि संरुध्य मारुतः कफपूर्ब्बकः। विष्वग्व्रजति संरुद्धस्तदा श्वासं करोति च॥" चिकित्सा—कफवातघ्नमुष्णं वातानुलोमनं भेषजं देयम्। भा.। यक्ष्म यथा—"सुदिन नासया चैव यः श्लेष्माणं विमुञ्चति। वातिकः शिशिरे काले तस्य श्वासं विनिर्दिशेत्। शरन्निदाघयोश्चैव श्वास. पित्तेन जायते। तथा दाहपरीतस्य भिन्नगात्रस्य वाजिनः। सुदिन नासया चैव कफो यस्य प्रवर्त्तते प्रावृट्काले वसन्ते वा श्वासस्तस्य कफात्मक.॥" ना.द.२५८.।

**श्वासकासः।** पुं। प्रसिद्धरोगद्वये। हाँपानि-कासि। निदा.।

**श्वासभक्षः।** पु। वर्व्वूरकवृक्षे। बाबलागाछ। रा.नि.व.८।

**श्वासहेतिः।** स्त्री। निद्रायाम्। हे.च.।

**श्वासारिः।** पुं। पुष्करमूले, कुष्ठे। कुड़। रा.नि.व.६।

**श्वित्रम्।** क्ली। किलासे। श्वेतकुष्ठे। धवल रोग। अम.। लक्षणं—"कुष्ठैकसम्भवं श्वित्रं किलासं चारुणं भवेत्। निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम्। वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत्। सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु। सकण्डूरं क्रमाद्रक्तमांसमेदःसु चादि-शेत्। वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरं। अशुक्ल-रोमबहुलमसंश्लिष्टं मिथो नवम्। अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा। गुह्यपाणितलोष्ठेषु जातमप्यचिरन्तनं। यच्चैनोयं विविधेन किलासं सिद्धिमिच्छता॥" मा.नि.।

**श्वित्रघ्नी।** स्त्री। वृश्चिकाल्याम्। बिछाटी। श.च.।

**श्वित्रारिः।** पुं। बाकुचीबीजे। सोमराजी-विशेष।

**श्वित्री (त्रिन्)।** त्रि। श्वित्ररोगिणि।

**श्वेत(क)म्।** क्ली। रौप्ये। त्रिका.। श्वेत-काष्ठे। ভাল রাঙ্গা। वै.निघ.। पु। कपर्द्दे। कड़ि। रा.नि.व.१२। श्वित्ररोगे।

**श्वेतः।** पु। शुक्लार्के। শ্বেত আকন্দ। रा.नि.व.१०। महाविष गृहगोधिके, मन्दविषे च। सु.कल्प.८अ.। See वृश्चिकः। श्वेतजीरके। श्वेतैरण्डे। कर्पूरे। चन्द्रमल्लिके। के.। श्वेत-सर्षपे। श्वेतकाञ्चने। हंसे। वै.निघ.। शङ्खे। শাঁখ। रा.नि.व.१। कपर्द्दके। कड़ि। हे.च.। श्वेताभ्रे। श.र.। जीवके। जटा.।

**श्वेतकटभी।** स्त्री। शुक्लकटभीवृक्षे। वा.उ.३८अ.। श्वेतगुञ्जायाम्।। वा.उ.५अ.।

**श्वेतकण्टकः।** पु। श्वेतवल्मीकायाम्। वै.निघ.।

**श्वेतकण्टकारिका (री)।** स्त्री। शुभ्रपुष्प-कण्टकार्याम्। শ্বেত কণ্টিকারী। रा.नि.व.४।

**श्वेतकण्टारिका।** स्त्री। शुक्लपुष्पकण्टका-र्याम्। শাদা কণ্টিকারি। हिं श्वेतरिंगिणी, श्वेतभटकटैया। तैं विलियवङ्कुडुगुनु। तत् पर्य्यायाः,—सितकण्टकारिका। सितकण्टा श्वेता क्षेत्रदूती लक्ष्मणा सितसिंही सितक्षुद्रा क्षुद्रवार्त्ता-किनी सिता सिंही कण्टवार्त्ताकी दुःस्पर्शा कण्-टेश्वरी निःस्नेहफला रास्ना महौषधी गर्द्दभी चन्द्र-पुष्पा चन्द्रिका चान्द्री प्रियङ्करी नाकुली दुर्लभा राष्ट्रा। गुणाः—कटूष्णा कफवातघ्नी चक्षुष्या दीपनी रसदा च। रा.नि.व.४।

**श्वेतकन्दा।** स्त्री। शुक्लातिविषायाम्। শাদা আতইচ। रा.नि.व.६।

**श्वेतकपोतः।** पुं। दर्व्वीकरसर्पविशेषे। सु.कल्प.४अ.।

**श्वेतकमलम्।** क्ली। श्वेतपद्मे। रा.नि.व.१०।

**श्वेतकरवीरः** । पुं । शुक्लपुष्पकरवीरवृक्षे । শাদা করবীফুলের গাছ । See करवीरः ।

**श्वेतकाकः** । पुं । शुक्लकाके । শাদা কাক । रावणकृतकार्त्स्न्यशतके ।

**श्वेतकाञ्चनः** । पुं । शुक्लपुष्पकाञ्चनवृक्षे । শ্বেত কাঞ্চন । प.मु. ।

**श्वेतकाण्डा** । स्त्री । श्वेतदूर्व्वायाम् । শাদা দূর্ব্বা । रा.नि.व.८ ।

**श्वेतकापोती** । स्त्री । स्वनामख्यातमहौषधी । सु.चि.३०अ. ।

**श्वेतकाम्बोजी** । स्त्री । श्वेतगुञ्जायाम् । শাদা কূঁচ । रा.नि.व.३ ।

**श्वेतकाष्ठा** । स्त्री । श्वेतपाटलायाम् । শাদা পারুল । वै.निघ. ।

**श्वेतकिणिही** । स्त्री । शुक्लकटभीवृक्षे । तत्पर्य्यायाः,—महाश्वेतकटभी सिताखिकटभी गिरिकर्णिका गिरीयपक्षी कालिन्दी शतपत्रा विषघ्निका महाश्वेता महाभोगी । गुणाः—कृष्णकिणिह्या अधिकतराः । रा.नि.व.९ । See किणिही ।

**श्वेतकुम्भिका (म्भी)** । स्त्री । शुक्लपाटलवृक्षे । वै.निघ. ।

**श्वेतकुरण्टकः** । पुं । शुक्लझिण्ट्याम् । শাদা ঝাঁটি । गुणाः—तिक्तः केश्यः स्निग्धः मधुरः उष्णः तीक्ष्णः दन्तहितः वलिपलितकुष्ठवातरक्तदोषकफकण्डूविषघ्नश्च । वै.निघ. ।

**श्वेतकुशः** । पुं । शुक्लदर्भे । শাদা কুশ । तत्पर्य्यायाः,—सितदर्भः ह्रस्वकुशः ह्रस्वदर्भः पूतः यज्ञभूषणः यज्ञीयपत्रकः यज्ञः ब्रह्मपवित्रः तीक्ष्णः सूचीमुखः पुण्यतृणः पूततृणः बर्हिः । मूलगुणाः—हिमं वृष्यं मधुरं पित्तरक्तज्वरघ्नं तृष्णाश्वासकामलागानाशनञ्च । रा.नि.व. ८ ।

**श्वेतकुष्ठम्** । क्ली । श्वित्ररोगे । धवल । निदा. ।

**श्वेतकुसुमा** । स्त्री । श्वेतनिर्गुण्ड्याम् । শ্বেত নিশিন্দা । वै.निघ. ।

**श्वेतकृष्णा** । स्त्री । कीटजातिभेदे । तद्दंष्टे दाहशोफक्लेदा भवन्ति । सु.कल्प. ८अ. ।

**श्वेतकेशः** । पुं । रक्तशिग्रौ । লাল সজিনা । भटा. ।

**श्वेतकोलः** । पुं । शफरमत्स्ये । পুঁটী মাছ । त्रिका. ।

**श्वेतखदिरः** । पुं । शुक्लखदिरवृक्षे । পাপরী-খয়েরের গাছ । प. सु. । मं पाढ़रा खैर । कं बिलियतक्ति, पपरीखयेर । तें तेल्लचंड । तत्पर्य्यायाः,—कदरः श्वेतसारः कार्म्मुकः कुजकण्टकः सोमवृक्षः सोमवल्कः सोमसारः पथिद्रुमः । गुणाः—तिक्तः कषायः कटुः उष्णः दाहघ्नः कफवातव्रणघ्नश्च । रा.नि.व.८ । "........वर्ण्यो मुखरोगकफास्रजिच्च ।" भा. ।

**श्वेतगण्डा** । स्त्री । श्वेतदूर्व्वायाम् । वै. निघ. ।

**श्वेतगरुत्** । पुं । राजहंसे । अम. ।

**श्वेतगुञ्जा** । स्त्री । शुक्लगुञ्जालतायाम् । শাদা কূঁচ গাছ । तत्पर्य्यायाः,—श्वेतकाम्बोजी भट्टिका काकपीलुः काकादनी चक्रमत्स्या चूड़ाला चक्रिका चूड़ा दुर्गापा । गुणाः—तीक्ष्णा उष्णा च । तद्बीजं वान्तिजनकम् । तन्मूलं शूलविषघ्नम् । तत्पत्रं वश्यकर्म्मणि प्रशस्तम् । रा.नि.व. ३ ।

**श्वेतघण्टा** । स्त्री । नागदन्त्यां । হাতিশুঁড় । दन्त्याम् । रा.नि.व.५।६ ।

**श्वेतघोषा** । स्त्री । श्वेतकोषातक्याम् । শাদা ঘোষা । वै.निघ. । [वै.निघ. ।

**श्वेतचणकः** । पुं । शुक्लचणके । শাদা ছোলা ।

**श्वेतचन्दनम्** । क्ली, पुं । (Santalum album.) स्वनामख्यातचन्दनवृक्षे । সারচন্দনের গাছ । प. सु. । See चन्दनम् ।

**श्वेतचरणः** । पुं । प्लवचर-जलज पक्षिविशेषे । सु.सू.४६अ. ।

**श्वेतचामरः (पुष्पः)** । पुं । काशतृणे । কেশে ঘাস । वै.निघ. ।

**श्वेतचिल्लिः (ल्लिका) ल्ली** । स्त्री । शुक्लवास्तुकशाके । श्वेतचिल्लीति भागीरथीतीरे प्रसिद्धा । শাদা বেতো । मं वाथुवा । कं बिलियचिल्लिके । वम्. लहुचाकदल । तत्पर्य्यायाः,—वास्तुकी सुपथ्या उपचिल्ली सितचिल्ली ज्वरघ्नी क्षुद्रवास्तुकी । गुणाः,—मधुरा क्षारा शिशिरा त्रिदोषघ्नी पथ्या ज्वरघ्नी च । रा.नि.व. ७ ।

**श्वेतच्छदः** । पुं । गन्धपत्र । বাবুই তুলসী । भ.च. । हंसे । हला. ।

**श्वेतजयन्ती ।** स्त्री । शुक्लजयन्तीवृक्षे । श्वेत जयन्ती । भैष. कुष्ठ.चि. ।

**श्वेतजरणः ।** पुं । शुक्लजीरके । शादा जीरा । वै.निघ. ।

**श्वेतजलजम् ।** क्ली । कुमुदे । सेंदाफूल । वै.निघ. ।

**श्वेतजीरकः ।** पुं । जीरकजीरके । शादा जीरा । मं पांढरे जीरे । कं बिळियजिरिगे । गुणाः—हिमी रुच्यः कटुः मधुरो दीपनः क्रमिघ्नः विषघ्नः चक्षुष्यः उदराध्मानहरश्च । रा.नि.व.६ ।

**श्वेतटङ्क(ण)म् ।** क्ली । स्फटिकाटिकायाम् । स्फटिकिरि । प. मु. । टङ्कणक्षारभेदे । सोहागा, शादा सोहागा । तत्पर्य्यायाः,—लोहि सिन्धु सिन्धुकरं मालतीतीरसम्भवं शिवं द्रावकरं शीतधारं टङ्कणम् । तद्गुणाः—स्निग्धं कटु उष्णं कफवातघ्नम् आम-चय-श्वास-विष-कास मलघ्नञ्च । रा.नि.व.६ ।

**श्वेततण्डुलमण्डम् ।** क्ली,पुं । धान्यपतण्डुलसिद्धमण्डे । आलो चालेर मण्ड । गुणाः— "मधुरं शीतलं किञ्चित् श्लेष्मलं शोषनाशनम् । वग्गरोगेद्दसंहृद्धं वातघ्नं श्वेततण्डुलम् ॥" चनि. १२ष. ।

**श्वेततुलसी ।** स्त्री । शुभ्रपत्रतुलसीवृक्षे । प.मु. ।

**श्वेतत्रिवृत् ।** स्त्री । शुक्लमूलत्रिवृति । शादा तेउड़ी । हिं श्वेतनिशोथर । गुणाः—"श्वेता त्रिवृत् रेचनी स्यात् स्वादुरुष्णा समीरहृत् । रुक्षा पित्तज्वरश्लेष्मपित्तशोषोदरापहा ॥" भा. ।

**श्वेतदण्डा (ण्डी) ।** स्त्री । श्वेतदूर्वायाम् । वै.निघ. ।

**श्वेतदन्ता ।** स्त्री । नागदन्त्या । वै.निघ. ।

**श्वेतदर्भः ।** पुं । शुक्लदर्भे । वै.निघ. ।

**श्वेतदूर्व्वा ।** स्त्री । शुक्लदूर्व्वायाम् । प.मु. । बम्. पांढरीहरियाली । क विळियकुरुके । तैं शतदूर्व्वाल् । तत्पर्य्यायाः,—गोलोमी सिताख्या चण्डा भद्रा भार्गवी दुर्म्मरा गौरी विजयानन्ता अनन्ता श्वेता शिवा श्वेतकाण्डा प्रचण्डा सहस्रकाण्डा सहस्रपर्व्वा सहस्रवीर्य्या सुरवल्लभा शुभा सुपर्व्वा सितच्छदा सत्त्वा कच्छाग्रहन्त्री । गुणाः—शीतला मधुरा वान्तिपित्तघ्नी आमातीसारकासघ्नी रुच्या दाह-तृष्णाघ्नी च । रा.नि.व.८ । "श्वेता दूर्व्वा कषाया स्यात् स्वाद्वी अस्रा च जीवनी । तिक्ता हिमा विसर्पासवट्पित्तकफदाहहृत् ॥" भा. ।

**श्वेतद्रुमः ।** पुं । वरुणवृक्षे । वरुण गाछ । वै. निघ. ।

**श्वेतधातुः ।** पुं । दुग्धपाषाणे । स्फटिकड़ि । रा.नि.व.१२ ।

**श्वेतधामा(न्) ।** पुं । कर्पूरे । समुद्रफेने । मे. ।

**श्वेतधूनकम् ।** क्ली । शुक्लधूनके । रस.र.ज्वराति. चि. षडङ्गोदपाटरसे ।

**श्वेतनाड़ी ।** स्त्री । खटिकायाम् । खड़ि । वै.निघ. । श्वेतापराजितायाम् । श्वेत अपराजिता । च.सू.४अ. ।

**श्वेतनामा ।** स्त्री । श्वेतापराजितायाम् । वै. निघ. ।

**श्वेतनिष्पावा ।** स्त्री । श्वेतपुष्पनिष्पावे । श्वेत शिम् । गुणाः—गुरुष्या मधुरा स्वल्पकषाया शीतला वातला बल्या श्वासानकरी पुष्टिकरी च । रा.नि.व.१६ ।

**श्वेतपटलम् ।** क्ली । अभ्रकधातौ । अभ्र-विशेष । वै.निघ. ।

**श्वेतपत्रम् ।** क्ली । श्वेतकमले । रा.नि.व.१० । चा.उ.५अ. । पुं । श्वेततुलस्याम् । प.मु. । राजहंसे । दुग्धदर्भे । शुभ्र शादा कुश । वै.निघ. । स्त्री (त्रा) । श्वेतशिंशपायाम् । शादा शिउ गाछ । रा.नि.व.६ ।

**श्वेतपद्मम् ।** क्ली । शुक्लकमले । तत्पर्य्यायाः, —सिताम्भोजं हरिपद्मं सितालं पुण्डरीकं वारिजं हरिनेत्रं शरत्पद्मं शारदं शम्भुवल्लभम् । गुणाः,—मधुरं तिक्तं शीतलं पित्तासदाहशोषभ्रमनाशकञ्च । रा.नि.व.१० । See पुण्डरीकम् ।

**श्वेतपर्णः ।** पुं । श्वेतार्के । प.मु. । स्त्री(र्णा) । वारिपर्णी । पाना । र.मा. ।

**श्वेतपर्णासः ।** पुं । श्वेततुलस्याम् । तत्पर्य्यायाः,—अर्ज्जकः गन्धपत्रः कुठेरकः । प.मु. ।

**श्वेतपाटला ।** स्त्री । शुक्लपुष्पपाटलवृक्षे । अटा. ।

**श्वेतपारावतः ।** पुं । शुभ्रकपोते । शादा पायरा । वै.निघ ।

**श्वेतपाषाणः ।** पुं । प्रस्तरभेदे । शादा पाथर । रो.धा.सं.रसप्रकरणे । स्फटिके । वै.निघ. ।

दारुहरिद्रा, विटलवण, सচল লবণ, যবক্ষার, সাচিক্ষার, সৈন্ধব, গজপিপুল, প্রত্যেকে ১ তো. শুদ্ধ গুগ্‌গুল ৫৪ তো.। ১ তোলা পরিমাণ বটী করিবে। অনুপান জল। सा· कौ। भैष.।

**सप्तशिरा**। स्त्री। नागवल्लीलतायाम्। পাণ-গাছ। रा· नि· व. ११।

**सप्ताङ्गगुग्गुलुः**। पुं। नाड़ीव्रणे औषधम्। त्रिफला शुण्ठी पिप्पली मरिचम् एषां प्रति ४ तो· शुद्धगुग्गुलुः २४ तो· घृतेन पिष्ट्वा यथासम्भवं भक्षणीयम्। सा. कौ.।

**सप्तामृतलौहम्**। क्लौ। नेत्ररोगे औषधम्। त्रिफला यष्टिमधु प्र. समभागः सर्व्वचूर्णसमं लौहं नाषमाना वटी घृतमधुभ्यां भोक्तव्या। सा· कौ·।

**सप्तार्चिः**। पुं। चित्रकवृक्षे। চিতা গাছ। अग्नौ। अम·।

**सप्ताश्वः**। पुं। अर्कवृक्षे। আকন্দ গাছ। अम·। श्वेतरोहीतकवृक्षे। শ্বেত রোহিতা গাছ। रा· नि· व. ८। सूर्य्ये।

**सप्ताह्वः (ह्वा)**। पुं, स्त्री। सप्तपर्णवृक्षे। भैष. कुष्ठ. चि. महाभल्लातकगुड़े। वा· चि· १२ अ.। वै. निघ. सर्व्वज्व. चि. क्षुद्रव्याघ्रघृते। सु. चि· ९अ·।

**सप्तिः**। पुं। अश्वे। अम·।

**सफरः**। पुं। प्रोष्ठीमत्स्ये। अ· टी· भ·।

**सफरी**। स्त्री। प्रोष्ठीमत्स्ये। পুঁটী মাছ। भा·।

**सभम्**। क्लौ। पुष्पे। वै. निघ.। पुं। हस्ते।

**समकाञ्चनः**। पुं। शालविशेषे। वै. निघ.।

**समखात्**। पुं। कफे। वै. निघ.।

**समकोलः**। पुं। सर्पे। त्रिका·।

**समक्षारः**। पुं। अष्टमांशावशिष्टक्वाथे। "सम-च्याष्टांशको मतः।" रा· नि· व· २०।

**समगन्धिकम्**। क्लौ। उशीरे। বেণার মূল। रा· नि· व· १२। २३।

**समङ्गा**। स्त्री। मञ्जिष्ठायां। रा· नि. व· ६।२३। लज्जालुकायाम्। रा· नि· व· ५।२३। भा. म. ४भ. बालातिसारे। "समङ्गाधातकीलोध्रसारिवाभिः।" सु· सू· ३८ अ· प्रियङ्ग्वादिः। सु· चि· २ अ·। च· सू· ४ अ· सन्धानीये। वराहक्रान्तायां। वराक्रान्ता। च· सू· ४ अ·। च· द· अ· सा· चि· पृश्निपर्ण्यादिः। बालके। বালা। सा· कौ· ह. ह्रीवेरादौ। बलायां। वै. निघ. २ भ संग्रहणी· चि· कुटजावलेहे।

**समङ्गिका**। स्त्री। लज्जालुकायाम्। चि· क्र. क. गर्भाधिकारे।

**समष्ठः**। पुं, क्लौ। समष्ठाख्यशाकभेदे। শুশ্নিয়া-শাক।

**समष्ठलः**। पुं। फलशाकविशेषे, वपुषादौ।

**समत्र(त्रित)यम् (त्रयी)**। क्लौ, स्त्री। हरी-तकीनागरगुड़ानां समभागे। रा· नि· व· २२।

**समदोषत्रयम्**। क्लौ। वात-पित्त कफ-साम्य-भावे। "वातपित्तकफा यत्र समतां यान्ति नित्यशः। त्रिदोषसममित्येतत्...... ॥" रा· नि, व· २२।

**समन्तपतिः**। पुं। शोभाञ्जनवृक्षे। रस·र·बाल· चि· नागार्ज्जुनचूर्णे।

**समन्तदुग्धा**। स्त्री। स्नुहीवृक्षे। তেকাঁটা মনসা। प सु.। रा· नि· व· ८। [निघ.।

**समन्वितकारी (इन्)**। पुं। आम्रवृक्षे। वै.

**समप्रकृतिः**। त्रि। समधातुप्रकृतौ। तल्लक्षणं यथा— "सम्मिश्रवर्णोऽतिसुदीर्घगात्रो गम्भीरधीरो-ऽतिविदीर्णरोमा। रामाप्रियो भारसहोऽतिनिद्रः भोगेन युक्तः समताप्रकृत्या ॥" भवि· पूअ·।

**समयोनिः**। पुं। कफे। वै. निघ.।

**समलम्**। क्लौ। विष्ठायाम्। श· र·। त्रि। मलिने। पुं। रजततामत्रपुलौहेषु। च. सू· १अ।

**समवर्णजा**। स्त्री। कुङ्कुमशाली। रा. नि· व. १६। See कुङ्कुमशालिः।

**सम(मा)वायः**। पुं। अपृथग्भावे। "सम-वायोऽपृथग्भावः।" च· सू· १ अ.। मा· नि·।

**समशनम्**। क्लौ। हिताहित-द्रव्यसमुदायान-पर्य्यायभोजने। "हिताहितोपसंयुक्तमन्नम् समशनं स्मृतम्।" सु· सू· ४६ अ·।

**समशर्करचूर्णम्**। क्लौ। यक्ष्मादौ, कासाधि-कारे च चूर्णम्। লবঙ্গ, জায়ফল, পিপুল প্রত্যেকে ২ তো. মরিচ ৪ তো. শুঁট ৪ প. সর্ব্বচূর্ণসমান চিনি। सा. कौ·। "शुण्ठीकणा-मरिचनागदलात्वगेलं चूर्णीकृतं क्रमविवर्द्धितमूर्द्धम-न्तात्। खादेदिदं समसितं गुदजाग्निमान्द्यकासा-रुचिश्वसनकण्ठहृदामयेषु" ॥ रस· र. अजी· चि·। च·द· अर्शश्चि·।

। श्यमदेशख्यातक्षुप-
विशेषे। हिं कक्‌षा। तत्पर्य्यायाः,—मच्छीरः नयाम्रः श्यामगन्धकः शीकायः कण्टकिफलः छपदंशः। गुणाः—कटुरसः रुच्यः तुखशोधनः कफवातप्रशमनः दीपनः दाहकृच्च। रा.नि.व.४। अपामार्गे। वै. निघ.।

**समठि(ठी)ला।** स्त्री। कटुगरपे। नयाम्रे। वै. निघ.। मच्छीरे। अम.। समठनामशाक-विशेषे। शठिशाक। सर्व्वानन्दः।

**समांशा।** स्त्री। क्षुद्रदलायाम्। क्षुद्रवेलेड़ा। वै. निघ.।

**समानवायुः।** पुं। तन्नामक-देहस्थवायौ। समान वायुः। तस्य स्थानं पच्यमानाशयाशयः। तस्य गुणः—"आमपक्वाशयचरः समानो वह्नि-सङ्गतः। सोऽन्नं पचति तज्जांश्च विशेषान् विवि-नक्ति हि। गुल्माग्निसादातीसारप्रभृतीन् कुरुते गदान्।" सु. नि. १ अ.।

**समालम्बः (म्बी)।** पुं। सुगन्धरोहिषतृणे। गन्धतृण। रा. नि. व. ८।

**समालम्भः।** पुं। कुङ्कुमादिविलेपने। अम.।

**समालम्भनम्।** क्ली। कषाये। कुङ्कुमादि-विलेपने। विश्व.।

**समासवान्।** पुं। तुन्नवृक्षे। श. च.।

**समाह्वा।** स्त्री। गोजिह्वायां। गोजिह्वा.शाक। श. च.।

**समितः (ता)।** पुं, स्त्री। गोधूमचूर्णे। मयदा। यथा—"गोधूमा धवला धौताः कुट्टिताः शोषिता-स्ततः। प्रोच्छिता यन्त्रनिष्पिष्टाश्चालिताः समिताः स्मृताः।" भा.। पू. ख.।

**समिदुत्तमः**
**समिद्वरः** } पुं। पलाशवृक्षे। वै. निघ.।

**समीचकः।** पुं। मैथुने। शब्दरत्न.।

**समीची।** स्त्री। स्त्रीमृगे।

**समीच्छदा।** स्त्री। वराहक्रान्तायाम्।

**समीदः।** पुं। गोधूमचूर्णे। मयदा। शब्दकल्प.।

**समीनिका।** स्त्री। प्रतिवर्षप्रसवायाम् गवि। वछरविआनी गाई। श. र.।

**समीरः।** पुं। शमीवृक्षे। रा. नि. व. ८।

**समीरणः।** पुं। मरुवकवृक्षे। गन्ध तुलसी। रा. नि. व. १०। वायौ।

**समीरणा।** स्त्री। गर्भाशयस्थित-नाड़ीविशेषे। "प्रधानभूता मदनातपत्रे समीरणा नाम विशेष-नाड़ी। तस्या मुखे यत् पतितन्तु वीर्य्यं तद्बीजकं स्यादिति चन्द्रमौलिः।"

**समीरसारः।** पुं। बिल्ववृक्षे। रा. नि. व. ११।

**समुच्चयः।** पुं। इदञ्चेदञ्चेति समुच्चयः। यथा —मांसवर्गे एणहरिणश्वावितित्तिरिशारङ्गाः प्रधान-मिति।

**समुत्क्रोशः।** पुं। कुररीपक्षिणि। श. र.।

**समुत्क्लिष्टः।** त्रि। स्वस्थानात् चलिते, बहि-र्नीते। वा. चि. १ अ. अरुणः।

**समुत्थानम्।** क्ली। व्याधिनिर्णये। मे.।

**समुद्गः।** पुं। सम्पुटे। हारा.।

**समुद्गिरणम्।** क्ली। वमने। वै. निघ.।

**समुद्रकफः।** पुं। समुद्रफेने। त्रिका.।

**समुद्रकान्ता।** स्त्री। स्पृक्कायाम्। पिड़िং। रा. नि. व. १२।

**समुद्रगृहम्।** क्ली। जलयन्त्रगृहे। फोयारा-शाल घर। त्रिका।

**समुद्रजम्।** क्ली। सामुद्रलवणे। रस. चि.।

**समुद्रजलम्।** क्ली। सागरसलिले। तद्गुणाः,— लवणं उष्णं विस्रं वैवर्ण्यदोषजनकं रक्तामयकरं दाहार्त्तिपित्तकृच्च। अपि च—"सामुद्रमुदकं क्षारं सर्व्वदोषप्रकोपणम्।

**समुद्रनवनीतम्।** क्ली। अमृते।

**समुद्रपुष्पम्।** क्ली। कपित्थपुष्पे। गुणाः— तुवरं मधुरं शीतलं रक्तदोषघ्नं कफघ्नं पित्तघ्नं कामलाहरं गर्भिणीकष्टहरञ्च। वै.निघ.।

**समुद्रफल(क)म्।** क्ली। (Argyria speciosa.) स्वनामख्यातवृक्षफले, कपित्थफले। दाक्षिणात्ये समुद्रकायफल इति ख्यातम्। हिं कसय फल, समुन्दरकापल्। बम्. समुन्दरशोक। तै समुन्दरपाल। वै.निघ.२भ.वा.व्या.चि. लिपदे। तदुक्तं—"समुद्रनाम प्रथमं पश्चात् फलमुदाहरेत्। समुद्रफलमित्यादि नाम वाच्यं भिषग्वरैः।" गुणाः—"फलं समुद्रस्य कटूष्णकारि वातापहं भूतशिरोधकारि। त्रिदोषदावानलदोषहारि कफा-

मयभ्रान्तिविरोधकारि ॥" धवप्रदेहः चर्म्मरोगहरः। मूलं वातहरं स्नायुदौर्ब्बल्ये च हितम्। क्वथित्। कटूष्णं वातघ्न लूतापहारकं त्रिदोषघ्नं कफरोगघ्नं भ्रान्तिनाशकञ्च। भा०। "समुद्रस्य फलञ्चोष्णं तिक्तञ्चैव त्रिदोषनुत्। वातञ्च भूतबाधाञ्च कफं भ्रान्तिं शिरोरुजम्। दोषं दावानलाख्यञ्च नाशयेदिति कीर्त्तितम्। जलेन घृष्टपीतञ्च कृमिनाशकरं परम् ॥" वै॰निघ॰।

**समुद्रफेणः (नः)।** पुं, क्ली। घनीभूतसागरोत्थफेनपुञ्जे। समुद्रेर फेना। गुर्ज॰ समुद्रफिण्। तत्पर्य्यायाः,—फेनं फेनः फेनकः अब्धिकफः सिन्धुकफः अर्णवजः अर्णवजफलः डिण्डिरः हिण्डिरः हिण्डीरः समुद्रकफः जलहासः उदधिमलः श्वेतधामा लवणोदधिसम्भवम् समुद्रफेणं वार्द्धिफेनं पयोधिजं सुफेनं अब्धिहिण्डिरः सामुद्रम्। गुणाः—शीतलं कषायं नेत्ररोगघ्नं कफकण्ठरोगहरं रुच्यं कर्णरोगघ्नञ्च। रा॰नि॰व॰६। "अब्धिफेणो रुचिकारी लेखनस्तुवरो लघुः। चक्षुष्यः शीतलश्चैव पटलादिरुजाहरः। सरश्च विषदोषघ्नः कर्णशूलहरः परः। कफस्य कण्ठरोगस्य पित्तस्यैव विनाशयेत् ॥" वै॰निघ॰।

**समुद्रमण्डूकी।** स्त्री। जलशुक्तौ। झिनुक। सु॰चि॰१८॰।

**समुद्रलवणम्।** क्ली। सामुद्रलवणे। करकच लवण। भा॰। See सामुद्रम्।

**समुद्रशोषः।** पुं। हिज्जलवृक्षे। हिज्जलगाछ। भैष॰धात्री॰। योग॰र॰उ॰कैशरपाके। गुणाः—"समुद्रशोषः सप्तोष्णो वातलो ग्राहको मतः। अतिपित्तकरश्चैव कफन्नाश मतो बुधैः ॥" वै॰निघ॰। सिन्धुवारे। निशिन्दा।

**समुद्रा।** स्त्री। शमीवृक्षे। शाँइ गाछ। शट्याम्। शटी। रा॰नि॰व॰८॥६।

**समुद्रान्तम्।** क्ली। जातीफले। जायफल। श॰च॰। पुं। दुरालभायाम्। रा॰नि॰व॰४। जातीफलवृक्षे। श॰र॰। स्त्री (न्ता)। दुरालभायाम्। अम॰। स्पृक्कायाम्। पिड़िं। मे॰। कार्पासे। कापास गाछ। रा॰नि॰व॰४। भैष॰शिरीरोगचि॰ हद्लिकाडिण्डीतैले।

**समुद्रारुः।** पुं। तिमिङ्गिलमीने। तिमि माछ। कुम्भीरे। मे॰।

**समुन्न(न्द)म्।** क्ली। आर्द्रतायाम्। अम॰।

**समूरः (रुः)।** पुं। मृगभेदे, शम्बरमृगे। है॰च॰। अम॰।

**समूहः।** त्रि। सान्निपातिके। रा॰नि॰व॰२०।

**समूहगन्धम्।** क्ली। गन्धराजे। धाटाशी। रा॰नि॰व॰१२।

**समूहनी।** स्त्री। सम्मार्ज्जन्याम्। झाँटा। है॰च॰।

**समूहक्षारः।** पुं। सर्ज्जक्षारे, मलशोधकक्षारद्रव्ये। साबान। वै॰निघ॰।

**समोदकम्।** क्ली। अर्द्धजलघोले। अम॰।

**सम्पत्।** स्त्री। वृद्धिनामौषधे।

**सम्पत्तिः।** स्त्री। ऋद्धौ।

**सम्पदाह्वा।** स्त्री। ऋद्धौ। प॰मु॰।

**सम्पाकः।** पुं। आरग्वधवृक्षे। सोन्दाल गाछ। प॰मु॰। च॰द॰अप॰चि॰ वृहत्पञ्चगव्यघृते।

**सम्पावः।** पुं, क्ली। रोटिकाभेदे। हिं पेराक्। तन्निर्म्माणविधिः यथा—पर्पट्याः साज्यसमिताः निर्म्मिता घृतभर्ज्जिताः। कुट्टिताश्चालिताः शुभ्रशर्करातिविमर्द्दिताः ॥ तत्र चूर्णं क्षिपेदेलालवङ्गमरिचानि च। नारिकेलं सकर्पूरं क्षारबीजान्यनेकशः ॥ घृताक्तसमितापृष्टरोटिका रचिता ततः। तस्यान्तःपूरणं तस्य कुर्य्यान्मुद्रां दृढां सुधीः ॥ सर्पिषि प्रचुरे तान्तु स पचेन्निपुणो जनः। प्रकारज्ञैः प्रकारोऽयं सम्पाव इति कीर्त्तितः ॥"

**सम्पुटः।** पुं। कुरुवकवृक्षे। रक्त झाँटी। शब्दकल्पः।

**सम्पुटाङ्गम्।** क्ली। भव्यफले। चालता। प॰मु॰।

**सम्पूटः।** पुं। कुरुवकवृक्षे।

**सम्प्रयोगः।** पुं। मैथुने। त्रिका॰। भा॰उ॰वाजी॰। "दैव्यस्त्रीसम्प्रयोगाच्च।"

**सम्प्रसक्तः।** त्रि। सन्तते। सु॰नि॰७अ॰।

**सम्प्राप्तिः।** स्त्री। रोगस्य सन्निकृष्टकारणे। मा॰नि॰। विशिष्टमेव व्याधिजन्मनि। वा॰। दोषविकर्त्तव्यतोपलक्षितव्याधिजन्मनि। रूपविशिष्ट हइया रोगेर उत्पत्ति। वि॰र॰। "यथा दुष्टेन दोषेण यथा चानुविसर्पता। उत्पत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिः ॥" मा पश्चनि॰।

**सम्फालः।** पुं। मेषे। है॰च॰।

**सम्ब(र)म्** । क्ली । जले । जटा० । चम० ।

**सम्बरः** । पुं । मृगभेदे । शम्बर । मत्स्यविशेषे । मे० । स्त्री (री) । मताचर्य्याम् । शतमूली । ग्र.र० । मण्डूकपर्ण्याम् । थूलकुड़ि । चम० ।

**सम्बलम्** । क्ली । जले । ग्र.र० ।

**सम्बाधः (धनम्)** । पुं, क्ली । भगे । मे० ।

**सम्बिदा** । स्त्री । विजयायाम् । सिद्धि ।

**सम्बिदामञ्जरी** । स्त्री । गञ्जिकायाम् । गाँजा । गुणाः,—"सम्बिदामञ्जरी चोग्रा मादिनी हर्षिणी तथा । कामयी तर्पिणी बल्या मन्मथोद्दीपनी च सा ॥ निद्राबह्वजननी गर्भपातिनी च दिकाग्निनी । वेदनाविच्छेदकारणी ज्ञेया च मदकारिणी ॥"

**सम्भरोद्भवम्** । क्ली । गाढ़लवणे । शाम्भर लवण । रा.नि.व.६ ।

**सम्भवः** । पुं । उत्पत्तिकारणे । सम्भवो नाम यो यतः सम्भवति स तस्य सम्भवः । यथा—"षड्-धातवो गर्भस्य, व्याधिरहितं, हितमारोग्यस्य इति ।" च.वि.८८ ।

**सम्भव्यः** । पुं । कपित्थवृक्षे । कयेथ् वनेर गाछ । ग्र.च० ।

**सम्भारम्** । क्ली । लवणविशेषे । शाम्भर लवण । वै.निघ० । पुं । तद्योग्याखिलद्रव्यसमुदाये । उपादानसमष्टि । च.सू.१५८ ।

**सम्भिन्नः** । त्रि । सम्यग्भेदविशिष्टे । निदा० ।

**सम्मार्जकः (नी)** । पुं, स्त्री । मार्जन्याम् । झाड़न, झाँटा । ग्र.र० । चम० ।

**सम्मार्जनम्** । त्रि । शोधने । र.मा० ।

**सम्मिलितद्रुमः** । पुं । रक्तपुनर्नवायाम् । रा.नि.व.५ ।

**सम्मूढ़पिटि(ड़)का** । स्त्री । शूकरोगभेदे । "पाणिभ्यां भृशसंमूढ़े संमूढ़पिड़का भवेत् ।" सु.नि.१४अ० ।

**सम्मूर्च्छनम्** । क्ली । मूर्च्छायाम् । मियन्ते ।

**सम्मोहकः** । पुं । प्रवृद्धमध्यक्षीणवातादिक-सन्निपातज्वरे । लक्षणं—"प्रलापायासमम्मोहकम्प-मूर्च्छारतिभ्रमाः । एकपक्षाभिघाताय तवाप्येते विक्षिपतः । एष सम्मोहको नाम्ना सन्निपातः सुदारुणः ॥" मा.म.१म.ज्व.चि० ।

**सम्यक्संहितः** । त्रि । सम्यग्योजिते । भा.म.२म० ।

**सम्यक्चारः** । पुं । टङ्कणक्षारे । सोहागा । र.सा.सं० ।

**सम्यग्दग्धम्** । क्ली । अग्निदाहविशेषे । दाह-प्रयोजने यथायोग्यदाहे । सु.सू० ।

**सरम् (स्)** । क्ली । लवणे । रा.नि.व.१० । जले । त्रिका० । सरोवरे । लक्षणं—"नद्याः शैल-वराद्यम्भो यत्र संसृत्य तिष्ठति । तत्सर.''' ..॥" मा० । पुं । महापिण्डीतरौ । रा.नि.व.८ । त्रि । दध्यग्रभागे । दैयेर नाथा । "दध्नमूपरि यो भागो घनः स्नेह-समन्वितः । स लोके सर-इत्युक्तो दध्नो मण्डस्तु मस्त्विति ॥" गुणाः—सरः स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशनः । साम्लो वस्ति प्रशमनः पित्तश्लेष्मविवर्द्धनः ॥ र.मा० । र.सा.सं० । सारकद्रव्ये । यथा—"पिप्पली मधुरा वृष्या-कटुका दीपनी सरा ।" राज० ।

**सरःकाकः** । पुं । हंसे । त्रिका० । स्त्री (की) । हंस्याम् । ग्र.र० ।

**सरकः** । पुं, क्ली । मद्यसामान्ये । रा.नि.व.१४ । क्षुद्रसरोवरे । ग्र.र० । शीधौ । शीधुपाने । मे. । वर्त्मनि । त्रिका० ।

**सरघा** । स्त्री । मधुमक्षिकायां । मौमाछि । चम. ।

**सरङ्गः** । पुं । पक्षिणि । उणा० ।

**सरलम्** । क्ली । उपद्रवोपहते । नवनीते । ननि । हारा. । र.सा.सं. ।

**सरलाः (स्)(ला)** । स्त्री । ऋतुमत्यां स्त्रियाम् । त्रिका. ।

**सरटः (ट्)** । पुं । मधुमक्षिकायाम् । मौमाछि । कृकलासे । गिरगिटी । चम. । रू.टी. ।

**सरटुः** । पुं । कृकलासे । गिरगिटी । उणा. ।

**सरणम्** । क्ली । माषवीमये । वै.निघ. । लौह-मले । मण्डूर । हे.च. । स्त्री(णा) । प्रसारण्याम् । गन्धभादुलिया । रा.नि.व.व.५ । त्रिवृतायाम् । तेउड़ी । ग्र.मा. । सु.मू.३६अ. । चेरचिहृति । स्वर्णजीवन्त्याम् । वै.निघ. ।

**सरणिः (णी)** । स्त्री । प्रसारण्याम् । गन्धभादु-लिया । रा.नि.व.५ । वा.व्या.चि.मध्यमनारायण तैले । च.द.मापतले. ।

**सरण्डः** । पुं । कृकलासे । गिरगिट । मे. । कामुके । पक्षिणि । श.र. ।

**सरण्युः** । पुं । जले । वायौ । मेघे । श.र. । अग्नौ । वसन्ते । उणा. ।

**सरलिः** । पुं । अरत्नौ, बद्धमुष्टिहस्ते । रा.नि.व.१८ ।

**सरघातिका** । स्त्री । पक्षपथे । श.र. ।

**सरमा** । स्त्री । कुक्कुर्याम् । मे. ।

**सरयूः** । स्त्री । नदीविशेषे । सा चायोध्यायां प्रसिद्धा । तज्जलगुणाः—स्वादु बल-पुष्टिकरञ्च । रा.नि.व.१४ ।

**सरलः** । पुं । ( Pinus longifolia. ) तन्नामकद्रुमे । वा.सू.१५.अ. । र.मा. । सरल गाछ, দেবদারু বিশেষ । हिं चिर्का पेड़, सरल, धूपसरल । मं वम्. धुपचेझाड़ । तै सरलदेवदारी । दा. चिर् । तत्पर्य्यायाः,—पीतदारु पीतद्रुः पूतिकाष्ठं भद्रदारु मनोज्ञः धूपवृक्षः पीतः स्निग्धदारुकः स्निग्धः नरिषपत्रकः पीतवृक्षः सुरभिदारुः । गुणाः—कटुतिक्तोष्णः वातश्लेष्मत्वग्दोषकण्डूव्रणघ्नः कोष्ठशोधकश्च । रा.नि.व.१२ । च.द. वा.ज्व.चि. रास्नादिः । "सरलं सैलबालुकम् ।" चीरगोरठे । क्षीरकम्रां । प.मु. ।

**सरलद्रवः** } पुं । धूपविशेषे । সরলধূপ । सरलवृक्षसारे । তার্পিণ তৈল । **सरलनिर्यासः** } अम. ।

**सरलवणम्** । क्लो । सुगन्धतृणे । व.निघ. ।

**सरला** । स्त्री । त्रिपुटायाम् । अम. । चिड्ढायाम् । ত্তেউড়ী । च.द. । सु.सू.३९अ. कफशमने । सु.चि १४।१०७अ. । शुक्लनिवृति । শ্বেত ত্তেউড়ী । सु.चि.२५अ. । कपिलद्राक्षायाम् । कृष्णतुलस्याम् । वै.निघ ।

**सरलाङ्गः** । पुं । श्रीवेष्टे । তার্পিন্ । সরলআটা । रा.नि.व.१२ ।

**सरसम्** । क्लो । मांसे । काष्ठागुरुणि । वै.निघ. । सरोवरे । श.र. । स्त्री (सा) । शुक्लत्रिवृति । च. टी.रा ।

**सरसन्नतम्** । क्लो । वल्मीकवृक्षे । তেকাঁটা সিজ্ । श.च. ।

**सरसिका** । स्त्री । हिङ्गुपत्र्याम् । श.च. ।

**सरसिजम्** । । कमले । रा.नि.व.१० ।

**सरसी** । स्त्री । तुम्बरुपत्रिकायाम् । वा.सू.१५ अ. सुरसादिः । "शवकसरसिभार्गीकासुकाकाकमाची ।" सरोवरे । अम. ।

**सरसीकः** । पुं । सारसपक्षिणि । সারস পাখী । श.र. ।

**सरसीरुहम्** । क्लो । पद्मे । अम. ।

**सरस्वती** । स्त्री । भारतीयनदीविशेषे । तज्जलगुणाः—स्वादु रुच्यं दीपनं लघु देहकान्तिजनकं सर्व्वरोगघ्नं पवित्रञ्च । रा.नि.व.१४ । गवि । मे. । ज्योतिष्मतीलतायाम् । লতাফটকী । रा नि.व.२ । ब्राह्मीक्षुपे । ব্রাহ্মী শাক । रा.नि.व.५ । सोमलतायाम् । श.च । गाभ्याम् ।

**सरा** । स्त्री । प्रसारण्याम् । গন্ধভাদুলিয়া । रा.नि.व.५ । मद.व.१ । त्रिवृतायां । ত্তেউড়ী । मद. विशेषे । वै.निघ. । निर्झरे । भ. द्विरूपको. ।

**सरावः** । पुं । शरावमाने । এক সের । भ द्विरूपको. ।

**सरिका** । स्त्री । हिङ्गुपत्र्याम् । श.च. ।

**सरित्पतिकफः** । पुं । समुद्रफेने । সমুদ্রফেন । भा.म.४भ.ने.रो चि.नयनशोणाञ्जने । "सरित्पतिकफः सिता ।" ।

**सरिलम्** । क्लो । जले । श.टी.भ. ।

**सरिषपः** । पुं । सर्षपवृक्षे । त्रिका. ।

**सरीसृपः** । पुं । सर्पादौ । त्रिका. । कृष्णसर्पे । सु.चि.२४अ. ।

**सरोजम्** । क्लो । पद्मे । हे.च. ।

**सरोजन्म (न्)** । क्लो । पद्मे । हे.च. ।

**सरोजिनी** । स्त्री । कमलिन्याम् । পদ্মের ঝাড় । पद्म । मे. ।

**सरोत्सवः** । पुं । बकपक्षिणि । सारसपक्षिणि । श.र. ।

**सरोऽमृतम्** । क्लो । सरोवरजले । वै.निघ. ।

**सरोरुट्** । क्लो । पद्मे । हे.च. ।

**सरोरुहम्** । क्लो । पद्मे । प.मु. । रक्तपद्मे । वै.निघ. । स्त्री (हा) । पद्मिन्याम् । वै.निघ. ।

**सरोवरः** । पुं । सरसि । পুকুর । तत्पर्य्यायाः, —पद्माकरः कासारः सरसः सरसी सरं सरः सरकं सरोजिनी । तज्जलगुणाः—"सारसं लघु तृष्णाघ्नं बल्यं स्वादु कषायवत् ।" ।

**सर्कः** । पुं । मनसि । उणा. ।

**सर्गः** । पुं । आत्यन्तिकदुःखनिवृत्तिरूपे सुखे । "सर्गापवर्गयोर्द्वारं......" । मा.नि. । नि.सरणे, त्यागे ।

**सर्जः** । पुं । शालनिर्यासे । धুনো । च द.ज्व. चि.अपराजिताधूपे । "पुरध्यामवचासर्जं ।" शाल-वृक्षे । सर्ज्जरक इति भाषा । शल्लकीवृक्षे । वै. निघ । पीतशाले । পেয়াশাল । श.र. ।

**सर्जकः** । पुं । सर्ज्जवृक्षे । শাল গাছ । जटा. । असनवृक्षे । वै.निघ. । सर्ज्जरसे । ধুনো । रस.र. बाल.चि. । पीतशाले । পেয়াশাল । अम. ।

**सर्जगन्धा** । स्त्री । रास्नायाम् । र.मा. ।

**सर्जनामा (न्)** । पुं । सर्ज्जतरौ । सु.चि.१७. ।

**सर्जनिर्य्यासकः** । पुं । शालनिर्य्यासे । ধুনো ।

**सर्जमणिः** । पुं । शाल्मलीवेष्टे । মোচরস । विका. ।

**सर्जरसः** । पुं । रालै । ধুনো । रा.नि.व.१२ । सु.सू.३८ध. एलादिः । See रालः । सर्ज्जवृक्षे । ধুনোর গাছ । रा.नि.व.९ । र.मा. । । भा.४भ. रेवतीप्रतिषेधचि. । "कुष्ठे सर्ज्जरसे तथा ।"

**सर्जशालः** । पुं । शालवृक्षे । र.मा. ।

**सर्जाख्यः (ह्वः)** । पुं । सर्ज्जरसे । ধুনো । भैष. क्षुद्ररो चि. । भा.म.४भ. ।

**सर्जिः (चारः)** । स्त्री, पुं । स्वर्ज्जिकाचारे । সাজিমাটী । र.मा. । See स्वर्ज्जिचारः ।

**सर्जिका (चारः)** । स्त्री, पुं । सर्ज्जिचारे । সাজিমাটী । र.मा. ।

**सर्जी** । स्त्री । सर्ज्जिक्षारे । সাজিমাটী । प.मु. ।

**सर्ज्यः** । पुं । सर्ज्जरसे । ধুনো । र.मा. ।

**सर्पः** । पुं । प्रसिद्धसरीसृपे । সাপ । सर्पो द्विविधः—दिव्यो भौमश्चेति । तत्र दिव्याः सर्पाः दृष्टिनिःश्वासविषा इति । भौमा दंष्ट्राविषाः । "ये तु दंष्ट्राविषा भौमा ये दंशन्ति च मानुषान् । तेषां संख्यां प्रवक्ष्यामि यथावदनुपूर्व्वशः । अशीति-स्त्वेव सर्पाणां भिद्यते पञ्चधा तु सा । दर्वीकरा मण्डलिनो राजिमन्तस्तथैव च । निर्विषा वैकर-ञ्जाश्च त्रिविधास्ते पुनः स्मृताः । दर्वीकरा मण्ड-लिनो राजिमन्तश्च पन्नगाः । तेषु दर्वीकराः ज्ञेया विंशतिः षट् च पन्नगाः । द्वाविंशतिर्मण्डलिनो राजि-मन्तस्तथा दश । वैकरञ्जोद्भवाः सप्त चित्रामण्डलि-राजिलाः ॥" एषु महानेत्रजिह्वास्यशिरसः पुमांसः, सूक्ष्मनेत्रजिह्वास्यशिरसः स्त्रियः, उभयलक्षणमन्द-विषा अक्रोधा नपुंसका इति । सु.कल्प ४ष. । एषां लक्षणानि स्वस्वपर्य्याये मृग्याणि । तद्गुणाः— अर्शोवातदोषहरः कृमिदूषीविषहरः चक्षुष्यः पाके मधुरः मेधाग्निजननश्च । "दर्वीकरा दीपकाश्च तेषूक्ताः कटुपाकिनः । मधुराश्चातिचक्षुष्याः सृष्ट-विण्मूत्रमारुताः ॥" सु.सू.४६ष. । तद्विषगुणाः— "विशदात्कटुकात्कटुकमम्लोष्णं स्वादु शीतलम् । विषं दर्वीकरादीनां क्रमाद्वातादिकोपनम् । तारुण्यमध्य-वृद्धत्वे वृष्टिशीतातपेषु च । विषोल्वणा भवन्त्येते व्यन्तरा ऋतुसन्धिषु ।" वा.उ.३६न. ।

**सर्पकङ्कालिका (ली)** । स्त्री । स्वनामख्यात-लतायाम् । সর্পকঙ্কালী, বন্ধ্যাকাঁকরোলবিশেষ । र.मा. । गन्धरास्नायाम् । प मु. । See रास्ना ।

**सर्पकञ्चुकः** । पुं । सर्पनिर्म्मोके । সাপের খোলস ।

**सर्पगन्धा (न्धिनी)** । स्त्री । गन्धरास्नायाम् । See रास्ना । नाकुलीनाममहाकन्दशाके । रा.नि. व.७ । वा.उ.५ष. । नागदमन्याम् । वै.निघ. ।

**सर्पघाति** । स्त्री । तन्नामकफलविषभेदे । सु. कल्प.२ष. । See फलविषम् ।

**सर्पघातिनी** । स्त्री । सर्पाच्याम् । পানশিউলি । तत्पर्य्यायाः,—सर्पसहा सर्पनामा सर्पाची सर्प-घातिनी । प.मु. ।

**सर्पच्छत्रकः** । पुं । शाकविशेषे । সাপের ছাতা । गुणा.—मलभेदनः रूक्षः मधुरः शीतः विष्टम्भी च । च.सू.२७ष. ।

**सर्पतनुः** । स्त्री । चविकायाम् । হাঁচুটী । See चविका ।

**सर्पदृषः** । पुं । नकुले । নেউল । हे.च. ।

**सर्पदंष्ट्रः** । पुं । दन्तीवृक्षे । श.च. ।

**सर्पदंष्ट्रा (ष्ट्री)** । स्त्री । वृश्चिकाल्याम् । বিছাতি । प.मु. । सिंहपिप्पल्याम् । गुणाः— सारका उष्णा कटुः कफघ्नी वातघ्नी च । वै.निघं. ।

**सर्पदंष्ट्रिका** । स्त्री । मेषशृङ्ग्याम् । अजशृङ्ग्याम् । মেড়াশিঙে । रा व

**सर्पदंष्ट्रा (न्त्रा)।** स्त्री। सिंहपिप्पल्याम्। रा.नि.व.६।

**सर्पदण्डी।** स्त्री। गोरक्षतण्डुलायाम्। गोरक्ष चाकुलिया। रा.नि.व.५।

**सर्पदन्ती।** स्त्री। नागदन्त्याम्। हातिशुँड़। रा.नि.व.५।

**सर्पदमनी।** स्त्री। नागदन्त्याम्। हातिशुँड़। वन्ध्याकर्कोटिकायाम्। रा.नि.व.३।

**सर्पदष्टकम्।** क्ली। सर्पदंशने। तच्च त्रिविधं सर्पितं रदितं निर्विषञ्चेति। केचित् चतुर्थं सर्पाङ्गाभिहतमिच्छन्ति। तेषां लक्षणानि यथा— "पदानि यत्र दन्तानामेकं द्वे वा बहूनि च। निमग्नान्यल्परक्तानि यान्युद्वृत्य करोति हि। चञ्चुमालकयुक्तानि वैकल्यकरणानि च। सदंशानि सशोफानि विद्यात्तत् सर्पितं भिषक्॥" इति। "राज्यः सलोहिता यत्र नीलाः पीताः सितास्तथा। विज्ञेयं रदितं तत्तु ज्ञेयमल्पविषञ्च तत्॥" इति। "अशोफमल्पदुष्टासृक् प्रकृतिस्थस्य देहिनः। पदं पदानि वा विद्यादविषं तच्चिकित्सकः॥" इति। "सर्पस्पृष्टस्य भीरोर्हि भयेन कुपितोऽनिलः। कस्यचित् कुरुते शोफं सर्पाङ्गाभिहतन्तु तत्॥" सु.कल्प.४अ.। वाभटस्तु तुण्डाहतव्यालीढव्यालुप्तदष्टनिपीडितदष्टकभेदेन पञ्चधाह। एषु प्रथमं द्वयं निर्विषं, निपीडितदष्टकम् असाध्यं व्यालुप्तदष्टञ्च कृच्छ्रसाध्यम्। एषां लक्षणानि स्वस्वपर्य्याये द्रष्टव्यानि। वा.उ.३६अ.।

**सर्पनामा।** स्त्री। सर्पाक्ष्याम्। सर्पकङ्कालो-विशेष, गानशिउली। प.मु.।

**सर्पनिर्मोकः।** पुं। सर्पत्वचि। सापेर खोलोस। प.शा.प्र.।

**सर्पनेत्रा।** स्त्री। सुगन्धरास्नायाम्। सर्पाक्ष्याम्। गानशिउली, सर्पकङ्कालोविशेष। रा.नि.व.७।

**सर्पपुष्पी।** स्त्री। वन्ध्याकर्कोटक्याम्। नागदन्त्याम्। हातिशुँड़। रा.नि.व.५।

**सर्पप्रियः।** पुं। चन्दनवृक्षे। वै.निघ.।

**सर्पफेण(न)म्।** क्ली। अहिफेने। वै.निघ. २भ. प.सा.चि.जातीफलादिवटिकायाम्।

**सर्पभक्षकः।** पुं। नाकुलीकन्दे। मयूरे। हे.च.।

**सर्पभुक्।** पुं। मयूरे। हे.च.। गरुडे। शाङ्गिष्ठा। राजसर्पे। नाकुलीकन्दे। रा.नि.व.७।

**सर्पमाला।** स्त्री। सर्पकङ्कालिकाभेदे। र.मा.।

**सर्पलता।** स्त्री। नागवल्लीलतायाम्। पान-गाछ। रा.नि.व.३।

**सर्पलोचना।** स्त्री। सर्पाक्ष्याम्। गानशिउली। वा.उ.२०अ.। गन्धरास्नायाम्। वै.निघ.।

**सर्पविषम्।** क्ली। सर्पगरले। सापेर विष। "विषमाविषमप्राप्य रक्तं दूषयते वपुः। रक्तमल्पमपि तु प्राप्तं वर्द्धते तैलमम्बुवत्॥" वा.उ.३६अ.।

**सर्पसञ्ज्ञा।** स्त्री। सर्पाक्ष्याम्। गानशिउली। प.मु.।

**सर्पसुगन्धा (न्धिका)।** स्त्री। सर्पगन्धायाम्। वै.निघ.।

**सर्हा (न्)।** पुं। नकुले। वेजि। हे.च.।

**सर्पा।** स्त्री। तन्नामकौषधौ। या च सर्पाकारा सर्पकङ्कालिका। चचिराम।

**सर्पाख्यः।** पुं। नागकेशरवृक्षे। र.मा.। महिषकन्दे। रा.नि.व.७। श्वेतालुके। शाँक-आलु। वै.निघ.।

**सर्पाङ्गी।** स्त्री। सर्पकङ्कालिकायाम्। रा.नि.व.६। सर्पकङ्कालीभेदे। पानशिउली। र.मा.।

**सर्पादनी।** स्त्री। लाङ्गलिकानामकन्दशाके। नाकुल्याम्। गन्धनाकुली। रा.नि.व.७।

**सर्पारिः।** पुं। नकुले। मयूरे। रा.नि.व.१९।

**सर्पावासम्।** क्ली। श्रीखण्डचन्दने। रा.नि.व.१२। श्वेतचन्दने। रा.नि.व.१२।

**सर्पाशनः।** पुं। मयूरे। हला.।

**सर्पास्त्रम्।** क्ली। नासाकर्णाशीर्षच्छेदनयोग्ये शस्त्रभेदे। "सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्द्धाङ्गुलं फले।"

**सर्पाक्षी।** स्त्री। सर्पच्छत्रायाम्। पानशिउली। हिं सरहटी गन्धिनी। तत्पर्य्यायो,—गण्डाली नाकुलीकालपक। प.मु.। र.सा.सं.। वै.निघ. २भ.एकाहिक.ज्व.चि.मृतसञ्जीवनीरसे। र.स.र. विष.चि.। गुणाः—"सर्पाक्षी कटुका तिक्ता सोष्णा कृमिनिकृन्तनी। वृश्चिकोन्दुरसर्पाणां विषघ्नी व्रणरोपणी॥" भा.पू.प.। श्वेतापराजितायाम्। रक्तगण्डिन्याम्। वै.निघ.। गन्धनाकुल्याम्। रा.नि.व.७।

**सर्पिः (स्)।** क्ली। दुग्धसमुत्पन्नस्नेहे, घृते। घि। रा.नि.व.१५। सृप गतौ संस्कारात् सर्पणात्

सर्पि: । "नान्य: स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते । यथा सर्पिरतः सर्पि: सर्व्वस्नेहोत्तमं मतम् ॥" मि-थो.वा.व्या.धि.श्रीकण्ठ: ।

**सर्पिका** । स्त्री । गोकर्णीलतायां । वै.निघ. ।

**सर्पिणी** । स्त्री । सर्पाकारपत्त्रक्षुपविशेषे । सर्प कङ्काली । तत्पर्य्याया:,—भुजगी भोगी कुण्डली पन्नगी फणी । गुणा:—विषघ्नी क्रुमिवर्द्धिनी च । रा.नि.व.५ । सर्पस्त्रियाम् । श.र. ।

**सर्पिर्गर्भम्** । क्ली । नवनीतके । वै.निघ ।

**सर्पिर्मेहः** । पुं । वातजन्यप्रमेहरोगे । तत्र घृत-तुल्यं मेहति । सु.नि.६प. ।

**सर्पिषम्** । क्ली । घृते । वै.निघ. ।

**सर्पी** । स्त्री । भुजग्याम् । श.र. ।

**सर्पी(र्पे)ष्टम्** । क्ली । श्रीखण्डचन्दने । र.मा. । जटा. ।

**सर्व्व:** । पुं । पारदे । र.सा.सं. प्रकारान्तरविषम-ज्व.रस । भैष-वा.र.चि. । सा.कौ.ज्वरान्तकरसे । रसाञ्जने । शिखामतुके । वै.निघ. ।

**सर्व्वग:** । पुं । जीवे । आत्मनि । श.मा. । क्ली । जले । मे. ।

**सर्व्वगन्धम्** । क्ली । चातुर्जातकादिषु द्रव्येषु । "चातुर्जातककर्पूरकक्कोलागुरुशिह्लकम् । लवङ्ग-सहितश्चैव सर्व्वगन्धं विनिर्दिशेत् ॥" प.प्र.३ख. । कुङ्कुमागुरुकर्पूरकस्तूरीचन्दनेषु । भा.म ४भ.श्व. पू.चि. । "सर्व्वगन्धै: प्रदेहश्च ।" "चातुर्जातक-कर्पूरं कक्कोलागुरु कुङ्कुमम् । लवङ्गसहितश्चैव सर्व्वगन्धं विनिर्दिशेत् ।" इति च । भा. । सौश्रुते एलादिगणे ।

**सर्व्वगा** । स्त्री । प्रियङ्गुलतायाम् । श.च. ।

**सर्व्वग्रन्थि: (थम्)** । पुं, क्ली । पिप्पलीमूले । रा.नि.व.६ । ३.च. ।

**सर्व्वग्रहापहा** । स्त्री । नागदमन्यां । नागदना । वै.निघ. ।

**सर्व्वजगत्प्रिया**
**सर्व्वजनप्रिया** } स्त्री । ऋद्धौ । वृद्धौ । वै.निघ. ।

**सर्व्वज्वरहरलौह:** । पुं । विषमज्वरे रसविशेष: । पचौ—चित्रकमूलं त्रिकटु त्रिफला विडङ्गं मुस्तकं गजपिप्पली पिप्पलीमूलं वीरणमूलं देवदारु किराततिक्तं बालकं कटुकी कण्टकारी शिग्रु-बीजं यष्टिमधु कुटजत्वक् इन्द्रयवो वा एषां प्रति समभाग: सर्व्वचूर्णसमं लौहं । मात्रा १ माषा । अनुपानं मधु । सा.कौ. । अन्य:—जारितलौह ১৬ তো. পারা ২ তো. গন্ধক ২ তো. আমলা, হরীতকী, বহেড়া, শুঁট, পিপুল, মরিচ, বিড়ঙ্গ, মুতা, গজপিপুল, পিপুলমূল, হরিদ্রা, দারুহরিদ্রা, চিতের মূল, প্রত্যেক ১ তো.। আদার রসে মর্দ্দন। মাত্রা ২ রতি। भैष. । तृतीय: बृहत्सर्व्वज्वरहर:—পারা, গন্ধক, অভ্র, তাম্র, স্বর্ণমাক্ষিক, স্বর্ণ, রৌপ্য, শুদ্ধ-হরিতাল প্রত্যেক ২ তো. কান্তলৌহ ৮ তো.। মর্দ্দনদ্রব্য—উচ্ছেপাতার রস, দশ-মূলের ক্বাথ, ক্ষেৎপাপড়ার রস, ত্রিফলাকাথ, শুলফের রস, পানের রস, কাকমাচীরস, নিশুণ্ডীপত্ররস, পুনর্নবারস ও আদার রস। মাত্রা ১ রতি। অনুপান পিপুলচূর্ণ ও পুরাণ গুড়। र.सा.सं. ।

**सर्व्वत:शुभा** । स्त्री । पिप्पलीमूले । प्रियङ्गौ । श.च. ।

**सर्व्वतन्त्रसिद्धान्त:** । पुं । सिद्धान्तविशेषे । "सर्व्वतन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिन् सर्व्वस्मिं-स्तन्त्रे तत् प्रसिद्धं ।" च.वि.८अध. ।

**सर्व्वतिक्ता** । स्त्री । काकमाचिकायाम् । रा. नि.व.४ ।

**सर्व्वतोभद्र:** । पुं । निम्बवृक्षे । रा.नि.व.९ । क्ली । आसनपर्य्यङ्काकारेण अश्मरीच्छेदने । "सेवनीं लङ्घयित्वा तु चतुर्थां दारिते गुदे । सर्व्वतो-भद्रकम्........ ॥" सु.चि.८अ. । वा.उ.२८अ. ।

**सर्व्वतोभद्रलौहम्** । क्ली । अम्लपित्त-कास-श्वासादिनाशक औषधविशेष: । तत्पाठ:,—"लौह-चूर्णं ह्रतं ताम्रमभ्रकञ्च पलम् पलम् । शुद्धसूतञ्च कर्षैकं गन्धकार्द्धं पलं तथा ॥ माक्षिकस्य विशुद्धस्य कर्षं शुद्धा शिलापरा । सार्द्धकर्षं विशुद्धञ्च शिलाजतु तथा परम् ॥ गुग्गुलोश्चापि कर्षैकं श्राणमाणं परस्य च । चूर्णं विडङ्ग-भल्लातवह्निर्य्यं तार्क्ष्यमूलजम् ॥ करिकर्णपलाशञ्च तालमूली पुनर्नवा । घनामृता नागबला: चक्र-मर्द्दक-सुष्विरी ॥ भृङ्गकेश-शतावर्य्यौ भद्रदारं फलत्रिकम् । त्रिकटुश्चापि सर्व्वेषां प्रत्येकञ्च नयेद् भिषक् ॥ सर्व्वमेकत्र संमर्द्य घृतेन मधुना सह ।

क्षिप्ते भाण्डे विनिक्षिप्य ततः कुर्य्याद् विधानवित् ॥ मार्षकादिक्रमेणैव लौहं सर्व्वरसायनम् ॥" जारित लौह, ताम्र, अभ्र, प्र. १ प. पारद २ तो. गन्धक ৪ তো স্বর্ণমাক্ষিক ২ তো. মনঃশিলা ও শিলাজতু প্র. ৩ তো. গুগ্‌গুলু ২-তো. বিড়ঙ্গ, ভেলা, চিতা, শ্বেত আকন্দ, হস্তিকর্ণপলাশ, তালমূলী, পুনর্নবা, মুতা, গুলঞ্চ, গোরক্ষ-চাকুলে, মুণ্ডিরী, ভৃঙ্গরাজ, কেওড়ে, শতমূলী, বীজতাড়ক, ত্রিফলা ও ত্রিকটু প্র. ॥० তো. একত্র ঘৃত ও মধুসহ মর্দন করিবে। মাত্রা. ১ মাষা। भैष।

**सर्व्वतोभद्रा (द्रिका)**। स्त्री। गाम्भार्य्याम्। গামার গাছ। रा.नि.व.९। वा.सू.१५घ. साहिवादो। भा.म.१म.ज्व.चि.। "श्रीफलः सर्व्वतोभद्रा।"

**सर्व्वतोमुखम्**। क्ली। जले। रा.नि.व.१४।

**सर्व्वधातुकम्**। क्ली। ताम्रे। वै.निघ.।

**सर्व्वपाचकः**। पुं। टङ्कणक्षारे। সোহাগা। वै.निघ.।

**सर्व्वभक्ष्या**। स्त्री। छाग्याम्। পাঁঠী। वै.च.।

**सर्व्वभूतप्रमर्द्दिनी**। स्त्री। वन्ध्याकर्कोटक्याम्। वै.निघ.। [द्रव्ये। वै.निघ.।

**सर्व्वभूमिकः**। पुं। दारुचिनीति ख्याते पत्र-

**सर्व्वमूल्यम्**। क्ली। कपर्दके। কড়ি। त्रिका.।

**सर्व्वयूपः**। पुं। गोरक्षधान्याम्लफलाम्लै रेताष मिश्रितैर्यो रसो भवति। स गुरुतरः। वै.निघ.।

**सर्व्वरसः**। पुं। धूनके। अम.। लवणरसे। वै.च.। स्त्री (सा)। लाजमण्डे। খৈয়ের মণ্ড। प.मु.। (क्ली)। औदरलवणे। वै.च.।

**सर्व्वरसोत्तमः**। पुं। लवणरसे। वै.च.।

**सर्व्वलवणम्**। क्ली। औदरलवणे। रा.नि.व.६।

**सर्व्वलोहम्**। क्ली। ताम्रे। वै.निघ.।

**सर्व्ववर्चसम्**। क्ली। ताम्रे। वै.निघ.।

**सर्व्ववर्णिका**। स्त्री। गाम्भारीवृक्षे। जटा.।

**सर्व्वश्वेता**। स्त्री। सर्पविशानाम प्राणहर-कीटविशेषे। सु.कल्प.८अ.। See कीट.।

**सर्व्वसंसर्गलवणम्**। क्ली। औदरलवणे। रा.नि.व.६।

**सर्व्वसहः**। पुं। विमहद्धिधान्यविशेषे, षष्टिकधान्ये। श्र.च.।

**सर्व्वसरः**। पुं। तन्नामकमुखरोगे। स वातपित्तकफशोणितनिमित्तः। तत्र वातजे वदनं सतोद स्फोटैः समन्तादाचितं भवति। पित्तजे मुखं रक्तपीत सदाह तनुस्फोटाचितं भवति। कफेनाल्पवेदनैः कण्डूयुतैः सवर्णैर्व्याप्तं भवति। रक्तजे च पित्तलक्षणं भवति। सु.नि.१६अ.।

**सर्व्वसहः**। पुं। गुग्गुलौ। प.मु.।

**सर्व्वसाधनम्**। क्ली। स्वर्णे। वै.निघ.।

**सर्व्वसिद्धिः**। पुं। श्रीफले। বেল। श्र.च.।

**सर्व्वस्नेहः**। पुं। चतुःस्नेहेषु। शि.यो.मा.व्या.चि. ग्रान्थकरोटे। See स्नेहचतुष्टयम्।

**सर्व्वहितम्**। क्ली। मरिचे। रा.नि.व.६।

**सर्व्वक्षारः**। पुं। क्षारविशेषे। সাবান। साबुन इति लोके। सवुखार इति दाक्षिणात्ये। तत्पर्य्यायाः,—सद्द्क्षारः समूहक्षारः फेनक्षारः महाक्षारः मलारिः क्षारमेलकः। गुणाः—अतिक्षारः चक्षुष्यः वस्तिशोधनः गुदावर्त्तक्रिमिघ्नः मलमूत्रविशोधनश्च। रा.नि.व.६। मुष्ककवृक्षे। घण्टापারুল। वै.निघ.।

**सर्व्वाख्यः**। पुं। पारदे। পারা। रस.को.। भैष.वा.र.चि.द्वादशायसे।

**सर्व्वाङ्गकम्पारिरसः**। पुं। वातव्याध्यधिकारे रसः। पाठः—"मृतं सूतं मृतं ताम्रं मर्द्दयेत् कटुफलद्रवैः। एकविंशतिवारञ्च शोष्यं पेष्यं पुनः पुनः। चणमात्रा वटी भक्ष्या...... ॥" रस.र.।

**सर्व्वाङ्गसुन्दरः**। पुं। रसोऽयं विरेचनाधिकारोक्तः। पाठः—"शुद्धसूतञ्च गन्धञ्च विषञ्च जयपालकम्। कटुत्रयञ्च त्रिफला टङ्कणञ्च समांशकम् ॥" मात्रा १ गुञ्जामिता। পারা, গন্ধক, বিষ, জয়পালবীজ, ত্রিকটু, ত্রিফলা, সোহাগার খৈ প্রত্যেক সমভাগ। মাত্রা ৩ রতি। र.सा.सं.। अन्यः कासाधिकारे यक्ष्माधिकारे च —"रस-गन्धकतुल्यांशौ द्वौ भागौ टङ्कणस्य च। मौक्तिकं विद्रुमं शङ्खं मारणीयं प्रयत्नतः। हेमभस्मार्द्धभागञ्च सर्व्वं खल्वे निधापयेत्। भिन्नद्रवस्य योगेन विधिवत् कारयेद्भिषक्। पश्चात् गजपुटं दद्याच्छीतलञ्च समुद्धरेत्। हेमभस्मसमं तीक्ष्णं लौहार्द्धं दरदं ततः। एकीकृत्य समस्तानि

स्वाचूर्णानि कारयेत्… ॥” নীরনরূপে লোহা-গার ধৈ করিয়া উত্তমরূপে তাহা চূর্ণ করিবে সেই ধই ২ তো. পারা ১ তো. গন্ধক ১ তো. মুক্তাভস্ম, প্রবালভস্ম, শঙ্খভস্ম প্রত্যেক ২ তো, সোণা ॥০ তো.। একত্র নিমছালের রসে মাড়িয়া গোলক প্রস্তুত করিবে, সেই গোলক বজ্রমূষায় রাখিয়া গজপুটে তীব্র-আলে পাক করিবে। শীতল হইলে তুলিয়া লৌহ ॥০ তো. ও হিঙ্গুল ।০ আনা দিয়া একত্র মাড়িয়া রাখিবে। মা. ২ র। অনু. পিপুলচূর্ণ ও মধু। রস-কৌ.। মপ.।

**सर्व्वाङ्गसुन्दरी**। स्त्री। वैद्यकपन्थविशेषे।

**सर्व्वानुकारिणी**। स्त्री। शालपर्ण्याम्। शुभ-पाणि। रा.नि.व.४।

**सर्व्वानुभूतिः**। स्त्री। श्वेतत्रिवृति। शादा तेउड़ी। अम.।

**सर्व्वान्नीनः**। त्रि। सर्व्वान्नभक्षके। पा.चि.१ च.। "सर्व्वान्नीनो भवेत्तथा।"

**सर्व्वायनी**। स्त्री। श्वेतत्रिवृतायाम्। वै.निघ.।

**सर्व्वाम्लम्**। क्ली। सर्व्वविषमयम्लाम्लद्रव्येषु, काञ्जिक-सुरा सौवीरक दधिमस्त्वादिषु। नि.यो. शालपर्ण्यादे।

**सर्व्वार्चः**। पुं। रुद्राक्षवृक्षे। वै.निघ.। क्ली। रुद्राक्षफले।

**सर्व्वाक्षिरोगः**। पुं। सर्व्वगतनेत्ररोगे। स षोडशविधः—वाताभिष्यन्दः अधिमन्थः हताधिमन्थः अन्यतोवातः शिरोत्पातः पित्ताभिष्यन्दः कफाभिष्यन्दः रक्ताभिष्यन्दः शुष्काक्षिपाकः शोथाक्षिपाकः अक्षिपाकात्ययः अम्लोषितः सन्निपाताभिष्यन्दः वातपैत्ताभिष्यन्दः वातकफाभिष्यन्दः पित्तश्लेष्माभिष्यन्दश्च। मा.उ.१५अ.। एषां विशेषा. स्वस्वपर्य्याये मन्तव्याः। See नेत्ररोगः।

**सर्व्वाची**। स्त्री। वृश्चिकायाम्। बिछुई। वै.निघ.।

**सर्व्वौषध(धि)गणः**। पुं। कुष्ठाद्यौषधिवर्गे। कुष्ठजटामांसी वचा हरिद्रा शैलेय चन्दन-मुरामांसी-कर्पूरमुस्ताम्। "कुष्ठमांसीहरिद्राभिर्वचाशैलेय-चन्दनैः। मुराकर्पूरमुस्ताभिः सर्व्वौषधमुदाहृतम्॥" रा.नि.व.२२। "मुरामांसी वचा कुष्ठं शैलेयं रजनीद्वयम्। शटी चम्पकमुस्ता च सर्व्वौषधिगणः स्मृतः॥" ज्योतिःशास्त्रम्। अपिच,—"हरिद्रा चन्दनं दार्व्वी मुस्तकं देवदारुकं। धन्याकं जीरकं मेथी धात्रीफलमुशीरकम्॥ त्रिसुगन्धिः शटी गन्धमाला कर्पूरकं वचा। नखी मरुबकं कुष्ठं देवदारु विडङ्गकं॥ मरिचं पद्मकाष्ठञ्च वालकं भद्रमुस्तकं। ग्रन्थिकञ्च जटामांसी पलाशः शैलजं शमी॥ चर्म्मचोरगकं दूर्व्वा मुरामांसी च कुङ्कुमं। अपामार्गो मधुरिका त्रिफला खदिरः कुशा॥ चातुर्जातकमेलोऽप्यष्टवर्गो यवस्तुम्बुरुः। नागेश्वरञ्च कस्तूरी त्रिफला पद्मकेशरम्॥ कक्कोलं धातकी-पुष्पं त्रिकटु रेणुकं यवः। तिलाः कुन्दुरु नलिकं भार्गी गोरोचना वचा॥ गुग्गुलु पुष्पञ्च नहुनी श्रीफलं वंशलोचना। इन्दीवरं कङ्कुता वकुलं मालतीदलम्॥ इन्द्रवीजं कोकनदं जयन्ती गजपिप्पली। श्वेतापराजितापुष्पं सर्व्वौषधिगणः स्मृतः॥"

**सर्व्वौषधिः**। स्त्री। सर्व्वौषधिगणे।

**सर्षपः**। पुं। ( Brassica campestris. Syn. Dinapis dichotoma.) स्वनाम-ख्यातक्षुद्रक्षुपविशेषे। সরিষা গাছ। हिं सरसों, सर्षों, जिरिया। गुणाः—रसपाकयोः कटुः स्निग्धः तिक्तः तीक्ष्णोष्णः वात-कफघ्नः रक्तपित्ताग्निवर्द्धनः रक्षोघ्नः कण्डुकुष्ठकृमिघ्नश्च। गौरस्तु श्रेष्ठः। भा.पू.। तीक्ष्णः वात-कफघ्न उष्णः रक्तपित्तकरः कटुः कृमिकुष्ठघ्नश्च। सिद्धार्थोऽपि तद्गुणः। राज.। स सितासितभेदेन द्विधा। (Brassica nigra.) The black mustard. कृष्णसर्षपे। কাল সরিষা। हिं कालिराइ, माक्ड़ाराइ, सर्षों, पियरी सरीस। तै आवलो। तत्पर्य्यायाः,—तन्तुभः कदम्बः कदम्बकः कटम्भरः सरिषपः विस्फटः तन्तुकः कटुस्नेहः राजक्षवकः। गुणाः—"…कटूष्णो वातगुल्महृत्। पित्तदाहप्रदो गुल्म कण्डूकुष्ठव्रणापहः॥" (Brassica juncea. Syn. Sinapis juncea.) राजिकायाम्। শ্বেত সরিষা, রাই সরিষা। हिं राजिका। गुणाः—"सिद्धार्थः कटुकोष्णश्च वातरक्तग्रहापहः। रूक्षो दीपनसनो वाग्मी विषभूतग्रहापहः॥" सर्षप-तैलगुणाः—तिक्तं कटुकं वात कफ विकारघ्नम् पित्तास्रदोषदं कृमि कुष्ठघ्नं तिलजवच्चुष्यच्च। सर्षप-शाकगुणाः—"सार्षपं कृमिघ्नं स्वादु त्रिदोष रक्तपित्तहृत्।" राज.३प.। अन्युष्णं रक्तपित्त-

प्रकोपकरं विदाहि कटुकं स्वादु रुचिदञ्च। रा. नि.८०। "सार्षपञ्च विदोषघ्नं रुचिदञ्चाग्निवर्द्धनम्।" चरि.१६५. । "विदाहि बद्धविण्मूत्रं रूक्षं तीक्ष्णोष्णमेव च। त्रिदोषं सार्षपं शाकम्...॥" सु.सू.४६अ. । सर्षप-नालगुणा:—"तीक्ष्णोष्णं सार्षपं नालं वातघ्नं श्लेष्मनाशनम्। कटु वमिप्रदं दद्रुकृमिघ्नं रुचिकारकम्॥" भा.पू.१भ.शा. व.। सर्षपविशेषे। रुपि। हिं गौरि। अस्य बीजं दीपनम्। पत्रं वातघ्नम्। Watts. षण्मरीच्यात्मकपरिमाणे। "षण्मरीच्यस्तु सर्षपः।" मागधमानमिदम्। प.प्र.। राजिकाषट्परिमिते माने। "तिस्रो राजिकामिथ सर्षपः।" कालिङ्गमानमेतत्।

**सर्षपकः**। पुं। तन्नामकन्दविषे। सु.कल्प.२अ.। See कन्दविषम्।

**सर्षपतैलम्**। क्ली। सर्षपबीजोत्थतैले। See सर्षपः।

**सर्षपनालम्**। क्ली। सर्षपदण्डे। नालशाकमिदम्। भा.। See सर्षपः।

**सर्षपा**। स्त्री। श्वेतसर्षपे। वै.निघ.।

**सर्षपिकः**। पुं। मापदरकीटविशेषे। सु.कल्प. ८अ.। See कीटः।

**सर्षपिका**। स्त्री। शूकरोगभेदे। तद्यथा— "गौरसर्षपतुल्या तु शूकदुर्भुग्नहेतुका। पिडका कफरक्ताभ्यां ज्ञेया सर्षपिका बुधैः॥" सु.नि.१४ अ.। तन्नामककीटभेदे। यथा—गलगोली श्वेतकृष्णरक्तराजिः रक्तमण्डला सर्वश्वेता सर्षपिका चेति। तामिर्दष्टे सर्षपिकावर्ज्जं दाहशोफक्लेदा भवन्ति। सर्षपिकया हृत्पीड़ातिसारश्च भवति। सु.कल्प ८ अ.। मसूरिकाभेदे। "चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी। नाम्ना सर्षपिका ज्ञेयाऽप्यङ्गमव विवर्जयेत्।" भा.।

**सर्षपी**। स्त्री। श्वेतसर्षपे। वै.निघ.। क्षुद्रपिप्पल्याम्। खञ्जन। विका.।

**सर्षपोद्भूतम्**। क्ली। श्वेतसर्षपे। वै.निघ.।

**सलम्**। क्ली। जले। श.टी.भ.।

**सलकटुकः**। पुं। हस्तपत्रशाके। नटिया शाक। प.मु.।

**सलपत्रम्**। क्ली। दारुशर्करायाम्। दारुचिनि। वै.निघ.।

**सलिलम्**। क्ली। जले। रा.नि.व.१४।

**सलिलकुन्तलः**। पुं, क्ली। शैवाले। विका.।

**सलिलग्रहः**। पुं। अश्वस्य ग्रहभेदे। जल.। यथा—"हेषते सततं यस्तु दृष्टरीना तुरङ्गमः। सन्नाघो न भूयतेऽथ तस्यापि सलिलग्रहः॥" ज.द.५०अ.।

**सलिलजम्**। क्ली। कमले। पद्म। अम.।

**सलिलधरः**। पुं। मुस्तायाम्। मूता। वै. निघ. २भ.जिह्वकल्प.चि.। मेघे।

**सलकट्टः**। पुं। शियालङ्घे। रा.नि.प.११।

**सल्लकी (ल्ली)**। स्त्री। (Boswellia thurifera.) Gum olibanum tree. स्वनामख्यातफलशाकलतायाम्। कुन्दुरुकी। शालविशेषे। यस्य निर्यासः शिलारस इत्युच्यते। शल. सल्वा, सालइ इति लोके। सं सल्लकि। फं तदि. गु। वग. शालइ। गुणाः—तिक्तमधुरा कषाया ग्राहिणी कुष्ठरक्तकफवातार्शोव्रणदोषघ्नी च। रा. नि.व.११। वै.निघ.२भ.र.अ.सा.चि.सल्लकादिस्वरसे। सु.सू.२५अ.। See शल्लकी।

**सवम्**। क्ली। जले। जटा.। पुष्परसे। शब्दकल्प.।

**सवनम्**। क्ली। प्रसवे। शब्दकल्प.।

**सवरम्**। क्ली। जले। विका.।

**सवररोध्रम्**। क्ली। श्वेतरोध्रे। पाटिया लोध। प.मु.।

**सवर्णकरणम्**। क्ली। विषमवणस्थानस्य देहसमानवर्णकरणे। सु.चि.१अ.।

**सवहा**। स्त्री। त्रिवृतायाम्। श.टी.भ.।

**सविता (तृ)**। पुं। अर्कवृक्षे। आकन्दगाछ। रा.नि.व.१०। सूर्य्ये।

**सवित्रम्**। क्ली। प्रसवकरणे। व्याक.। स्त्री (त्री)। धात्र्याम्। धाइ। अचिः।

**सविभालम्**। क्ली। नखीनामगन्धद्रव्ये। वै. निघ.।

**सवीर्य्या**। स्त्री। शतावर्य्याम्। शतमूली। रा. नि.व.४।

**सव्यम्**। क्ली। वामकाये। अम.।

**सव्यभिचारम्**। क्ली। सव्यभिचारं नाम यत्

व्यभिचरणं, यथा—"भवेदिदमौषधमस्मिन् व्याधौ योगिकमथवा नेति।" च.वि.८अ.।

**सव्यसाची** (इन्)। पुं। अर्ज्जुनवृक्षे। अर्ज्जुन गाछ। रा.नि.व.९।

**सव्रणशुक्लः**। पुं। नेत्रकृष्णगतरोगभेदे। लक्षणं यथा—"निमग्नरूपं हि भवेत्तु कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै। स्रावं स्रवेदुष्णमतीव रुक् च तत्सव्रणं शुक्लमुदाहरन्ति॥" सु.उ.१अ.।

**सशल्यः (ल्या, स्या)**। पुं, स्त्री। भल्लूके। रा. नि.व.१९। नागदन्त्याम्। हातिशुँड़। र.मा.।

**सशाकम्**। क्ली। आर्द्रके। आदा। रा.नि.व.६।

**ससत्त्वा**। स्त्री। गर्भवत्यां स्त्रियाम्। अ.र.।

**ससिद्धः**। पुं। सर्जवृक्षे। धुनोर गाछ। रा. नि.व.९।

**सस्यम्**। क्ली। फले। अ.टी.भ.। धान्यके। धान। हे.च.। शूकधान्य शमीधान्यसमूहे।

**सस्यमारी** (इन्)। पुं। महामूषिके। मोटा इँदुर। रा.नि.व.१९। [सप्तकीवृक्षे। वै.निघ.।

**सस्यसंव(स)रः**। पुं। लकुशाखवृक्षे। अम.।

**सस्यसंवरणः**। पुं। अश्वकर्णशाले। रा.नि.व.९।

**सहम्**। क्ली। बले। मे.। मार्गशीर्षमासे। हे.च.। पांशुलवणे। रा.नि.व.६।

**सहकारः**। पुं। अतिसौरभयुक्ते आम्रवृक्षे। प.मु.। रा.नि.व.११। अम.।

**सहचरः**। पुं। झिण्टीक्षुपे। झाँटि गाछ। मे.। पीतझिण्ट्याम्। पीतझाँटि। र.मा.। वा.सू.१५अ. वेल्लन्तरादिव.। "पीतकण्टकीक्ष्टि-सहाचरबाणकाशाः।" नीलझिण्ट्याम्। प.मु.। सु.सू.३९अ. संशोधने।

**सहचरद्वयम्**। क्ली। नील पीतझिण्टीद्वये। कण्टकशेलुद्वये। सु.सू.३८अ डल्लणः।

**सहचरा (री)**। स्त्री। पीतझिण्ट्यां। र.मा.। वै.निघ.। अश्विक.ज्व.चि.वचादिः। नीलझिण्ट्याम्। प.मु.।

**सहजक्षति**। क्ली। सुवर्णे। वै.निघ.।

**सहजरसः**। पुं। स्वरसे। रस.चि.९अ.।

**सहण्डुकम्**। क्ली। मांसकृत व्यञ्जनविशेषे। यथा—"छागादिमांसं मूद्गादिः कुट्टितं खण्डितं पुनः। पक्वमांसविधानेन पचेदेतत् सहण्डुकम्। सहण्डुकं गुणयन्ये शुष्कमांसगुणं स्मृतम्॥" भा.।

**सहदेवा (वी)**। स्त्री। (Sonchus aruenois. Syn. S. Orixensis.) बलायाम्। बेलेड़ा। वनपालङ्क। वन पालं। हिं सहदेवी बड़ी। मं सहदेवी। पञ्जा. भारा। पीतपुष्पबलायाम्। फाङ्कसोति लोके। पीत बेलेड़ा। तत्पर्य्यायाः,—महाबला ज्येष्ठबला कटम्भरा किशाहहा केसरिका मृगादनी वर्षपुष्पा देशवर्त्तिनी परासिनी देवबला सारिणी पीतपुष्पी देवार्ही गन्धवल्लरी। गुणाः—पथ्या हृद्या विषमज्वर-वातार्शो-हृद्रोग-शोफनाशिनी। सर्पाक्ष्याम्। शारिवायाम्। मे.। नीलपुष्पबलायाम्। सु.सू. ३८अ.। चि.८अ.। महाबलायाम्। गोरक्ष-चाकुलिया। रा.नि.व.४। भा.सन्नतादि. ज्व.चि.। पीतदण्डोत्पलायाम्। पीत डानकुनी। र.मा.। भैष.ज्व. चि.पानीयभक्तवट्याम्। दण्डोत्पलायाम्। डानकुनी। हिं सियदेवी। च.द. शूल.चि. एरण्ड-द्वादशके। च.वि.८अ.। प्रियङ्गौ। महानील्याम्। वै.निघ.।

**सहद्रकम्**। क्ली। सहण्डुकमांसे।

**सहपानम्**। क्ली। एकत्रपाने। हे.च.।

**सहभादली**। स्त्री। प्रसारण्याम्। गन्धभादुलि। भैष.आमवातचि. लेपे।

**सहभोजनम्**। क्ली। एकत्रभोजने। अम.।

**सहरसा**। स्त्री। मुद्गपर्ण्याम्। मुगानी। अ.र.।

**सहसानुः**। पुं। मयूरे। उणा.।

**सहस्यः**। पुं। पौषे मासि। अम.।

**सहस्रकाण्डा**। स्त्री। श्वेतदूर्व्वायाम्। शादा दूर्व्वा। रा.नि.व.८।

**सहस्रजित्**। स्त्री। कस्तूर्य्याम्। मृगनाभि। वै.निघ.।

**सहस्रदंष्ट्रः**। पुं। महापाठीनमत्स्ये। बोयाल माछ, चितल माछ। अम.।

**सहस्रदंष्ट्री** (इन्)। पुं। मत्स्यविशेषे। बोयाल माछ। अ.र.।

**सहस्रधौतः**। त्रि। सहस्रवारं क्षालिते घृतादौ। हाजारबार धोओया घृतादि। वा.चि.१अ.।

**सहस्रनुत्**। पुं। अम्लवेतसे। शा.पू.१अ.।

**सहस्रपत्रम्।** क्ली। कमले। पद्मफूल। रा. नि.व.१०।

**सहस्रपर्व्वा।** स्त्री। श्वेतदूर्व्वायाम्। रा.नि.व.८।

**सहस्रपादः।** पुं। कारण्डवपक्षिणि। गाङ्गेय पायी। मे.।

**सहस्रभित्।** क्ली। अम्लवेतसे। भा.।

**सहस्रमूली।** स्त्री। द्रवन्त्याम्। रा.नि.व.५। आखुकर्ण्याम्। मूषाकाणी। वै.निघ.।

**सहस्ररसा।** स्त्री। मुद्गपर्ण्याम्। मुगानी। श.र.।

**सहस्रवीर्य्या।** स्त्री। दूर्व्वायाम् र.मा.। च. चि.४अ.। नीलदूर्व्वायाम्। च.शा.८अ.। महाशतावर्य्याम्। रा.नि.व.४। श्वेतदूर्व्वायाम्। रा. नि.व.८। च.सू.४अ.।

**सहस्रवेध(धि)म्।** क्ली। चुक्रनामकाम्लिक-भेदे। रा.नि.व.१५। हिङ्गुनि। हिङ्। मे.। भा.।

**सहस्रवेधपाषाणः।** पुं। हिङ्गुमस्तरे। वै. निघ.२भ.मधुरत्त्व.चि.।

**सहस्रवेधिका।** स्त्री। मृगनाभी। वै.निघ.।

**सहस्रवेधी (धिन्)।** पुं। अम्लवेतसे। हिङ्गुनि। रा.नि.व.६। मृगमदे। मृगनाभि। रा.नि.व.१२। चुक्र। टकपालङ्। प.मु.। स्त्री। तामपुष्प्याम्। धातक्याम्। पाटलायाम्। श्यामालतायाम्। चित्रतायाम्।

**सहस्रांशी**
**सहस्राङ्शी** } स्त्री। ह्रस्वपीलुवृक्षे। वै.निघ.।

**सहसा (स्री)।** स्त्री। अम्लदायां। भा.। मयूर-शिखायाम्। वै.निघ.।

**सहस्राङ्घ्रिः।** पुं। मयूरशिखायाम्।

**सहाः (स्)।** पुं। हेमन्तकाले। मे.। अग्रहायण-मासे। अम.। स्त्री (हा)। घृतकुमार्य्याम्। प.मु.। माषपर्ण्यां। माषाणी। च.द.बाल.चि.सहादिस्नाने। मुद्गपर्ण्याम्। मुगानी। सु.सू.३८अ.। सर्पकङ्कालि-कायाम्। श.च.। शुक्लझिण्ट्यां। श.च.। रास्नायां। र.मा.। स्वर्णयूथ्याम्। शेयालकाँटा। प.मु.। पीतदण्डोत्पलायाम्। पीत डानकुनी। र.मा.। तरणीपुष्पवृक्षे। रा.नि.व.१०। देवसाहवृक्षे। देवदारु। रा.नि.व.२। सेवतीपुष्पजाती। भा. रेवतीवटचि.। "सहा विदारी श्वेतासाम्।" नखरक्षाकर्मेष्वत्रे। रेईमी। मे.।

**सहाचरः।** पुं। नीलपीतझिण्ट्याम्। नील ओ पीतझाँटी। श.र.। वा.सू.१५अ.। "गोकण्ट-कोल्कटसहाचरयावशाखाः।" सु.चि.६७अ.।

**सहाह्वयम्।** क्ली। मुद्गपर्ण्यां माषपर्ण्यां च। सु.मधुरजीवनीयगणे।

**सहायः।** पुं। चक्रवाकपक्षिणि।

**सहारः।** पुं। आम्रवृक्षे। उणा.।

**सहासारः।** पुं। वीरान्नावे। मूत्रस्त्र।

**सह्यम्।** क्ली। स्वास्थ्ये। अधिकतायाम्। सुन धुरे। श.र.।

**सह्योरा।** स्त्री। चीरिणीवृक्षे। खिरुई वा खिराई। वै.निघ.।

**साकु(खु)रुण्डः।** पुं। स्वनामख्यातवृक्षे। संकुरुण्ड इति गूर्ज्जरे ख्यातः। तत्पर्य्यायाः,—ग्रन्थिफलः विकटः वस्त्रभूषणः कुरण्डः कर्व्वुरफलः मकुरण्डः। गुणाः—कषायः रुचिकरः दीपनः सारकः श्लेष्मवातघ्नः वस्त्ररञ्जनः लघुश्च। रा.नि. व.६। वै.निघ.२भ.प.सा.चि.साखरुण्डचूर्णे।

**साक्तुकम्।** क्ली। सक्तुसमूहे। यवे। व्याक.।

**सागरकम्।** क्ली। सामुद्रलवणे। वै.निघ.।

**सागरगामिनी।** स्त्री। सूक्ष्मैलायां। छोट एलाच। रा.नि.व.६।

**सागरजम्।** क्ली। लवणे। वै.निघ.।

**सागरजमलः।** पुं। समुद्रफेने। वै.निघ.।

**सागरफेनः।** पुं। समुद्रफेने।

**सागरोत्थम्।** क्ली। सामुद्रलवणे। करकच। रा.नि.व.६।

**सागरोद्भूतः।** पुं। शङ्खे। शाँक। वै.निघ.।

**साङ्कृत्यः।** पुं। ऋषिविशेषे। च.।

**साङ्कुष्ठा।** स्त्री। गुञ्जालतायाम्। र.मा.।

**साङ्घातिकः।** त्रि। मारात्मके।

**साचिवाटिका।** स्त्री। पुनर्नवायाम्। र.मा.।

**साचिचारः।** पुं। स्वर्जिकाक्षारे। साज्जिमाटी।

**साञ्जनः।** पुं। गृहगोधायाम्। कृकलासे। कौरगास। श.च.।

**सातला।** स्त्री। चर्म्मकषायाम्, पीतदुग्धसेहुण्ड-

भेदे । दन्तमांसविशेष । यम. वड्गिसमोगुणी वा हिरियघटकनख । तत्पर्य्यायाः,—सतला चमना सारी विन्दु विमला विपुला वहुफेना चर्म्मकषा पंना दीना विपालिका सर्प्पदुषी प्रवचना । गुणाः —कफपित्तघ्नी लघुः तिक्ता कषाया विसर्पकुष्ठ-विस्फोटव्रणघ्नी च । रा.नि.व.४ । अपिच,— "सातला कटुका पाके वातला शीतला लघुः । तिक्ता शोथ-कफानाह-पित्तोदावर्त्त रक्तजित् ॥" भा. ।

**सातीलकः** । पुं । कलायभेदे । मटर । प. टी.रा. ।

**सात्म्यम्** । क्ली । यद्यस्य सेवितं सुखाय सम्पद्यते तत् तस्य सात्म्यम् । तत्र द्विविधं चेष्टाख्यमाहारा-ख्यञ्च । चेष्टाख्यञ्च कायवाङ्मनोभेदात्त्रिविधम्, आहाराख्यञ्च रसभेदात् षड्विधम् । सु.सू.१०अ. ८. । औषधादिजनित-सुखानुबन्धे, व्याधिगुण विपरीते आहारविहारादौ । "हेतुव्याधिविपर्य्यस्त-विपर्य्यस्तार्थकारिणाम् । औषधान्नविहाराणामुप योगं सुखावहम् । विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतम् ॥" मा.नि. । सात्म्यं नाम तत् यदात्मन्युपशेते । तत्त्रिविध प्रवरावरमध्यविभागेन । तत्र सर्व्वरसं प्रवरम् एकरसमवरं मध्यन्तु प्रवरा वरमध्यस्थम् । च.वि.१अ. ।

**सादः** । पुं । अवसाने । क्षामतायाम् । वै.निघ. । कर्द्दमे ।

**सादनी** । स्त्री । कटुरोहिण्याम् । कुट्की । रा.नि.व.६ ।

**साद्रवः** । पुं । कुरङ्गमृगे । त्रिका. ।

**साधकम्** । क्ली । तन्नामकपित्ते । भा. । See पित्तम् । पुं । तन्नामकहृदस्थाग्नी, येन मनोऽभि लाषः सिध्यति । सु.सू.२१अ. । दमनकवृक्षे । वै. निघ. ।

**साधनम्** । क्ली । मिश्रे । रा.नि.व.१० । पुत्र-जीववृक्षे । वै.निघ. । द्रव्ये । अम. ।

**साधारणदेशः** । पुं । जाङ्गलानूपोभयदेश लक्षणयुक्ते प्रदेशे । लक्षण यथा—"उभयगुणयुतं वा नातिरुचं न स्निग्धं न च खरबहुलश्चाप्यसितः कण्टकाढ्यं । भवति च जलकीर्णं नाति शीतं नचोष्णं समप्रकृतिसमेतं विद्धि साधारणञ्च ॥" अवि. ४अ. । "मिश्रचिह्नन्तु यो देशः स हि साधारणः स्मृतः । तस्मिन् देशे यदुदकं तत्तु साधारणं स्मृतम् ॥" अपिच,—समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः । दोषाणां समता तस्मात् तस्मात् साधारणो मतः ॥"

**साधारणमृगः** । पुं । जाङ्गलानूपोभयदेश-चारिणि जन्तौ, शूकरादौ, यथा—"शूकरा मृग-महाद्याः सलिलाश्रयमाश्रिताः । मकराद्याश्च गवाद्याश्च गवयाश्च तथापरे । महिषाद्याश्च ये चैव ते च साधारणा मताः ॥" अवि. २०अ. ।

**साधिका** । स्त्री । सुषुप्तौ । हे.च. ।

**साधुः (कः)** । पुं । दमनकवृक्षे । वै.निघ. । साधुवृक्षे । रा.नि.व.९ ।

**साधुपुष्पम्** । क्ली । स्थलपद्मे । स्थलपद्म । श.मा. ।

**साधुरसा** । स्त्री । मदिरायाम् ।

**साधुवृत्तः** । त्रि । हिताहारविहारकारिणि ।

**साधुवृक्षः** । पुं । वादमवृक्षे । बदाम गाछ । श.च. । वदरवृक्षे । बदाम गाछ । रा.नि.व.९ ।

**साध्यः** । त्रि. । साधनीये विषये ।

**साध्वसम्** । क्ली । भये । अम. । लज्जायाम् ।

**साध्वी** । स्त्री । मेदायाम् । रा.नि.व.५ । दुग्ध-पाषाणे । दूधखडि । प.मु. ।

**सानन्दः** । पुं । गुच्छकरञ्जे । रा.नि.व.९ ।

**सानसिः** । पुं । सुवर्णे । उणा. ।

**सानुजः** । पुं । तुम्बुरुवृक्षे । रा.नि.व.११ । पुण्डरीकवृक्षे । पुण्डरिया गाछ । रा.नि.व.१२ । स्त्री । त्रायमाणायाम् । बलाडुमुर ।

**सानुबाधनः** । त्रि कालान्तरप्राणहरे । च.सू.१अ.

**सानुमानकः** । पुं । पुण्डरीकवृक्षे । पुण्डरिया गाछ । वै.निघ. ।

**सान्दृष्टिकम्** । क्ली । तात्कालिकफले । वै.निघ.।

**सान्द्रम्** । क्ली । तक्रे । घोल । वै.निघ. । त्रि. । घने । स्निग्धे ।

**सान्द्रपुष्पः** । पुं । विभीतकवृक्षे । श.च. ।

**सान्द्रप्रसादमेहः (होमिन्)** । पुं । कफज-मेहविशेषे । लक्षणं यथा—"यस्य संहन्यते मूत्रं किञ्चित्किञ्चित् प्रसीदति । सान्द्रप्रसादमेहीति तमाहुः श्लेष्मकोपतः ॥" च.नि.४अ. ।

**सान्द्रमेहः** । पुं । मेहरोगभेदे । अत्राविद्धं सान्द्रञ्च मेहति । सु.नि.६अ. ।

**सान्ध्यकुसुमा** । स्त्री । त्रिसन्धिपुष्पवृक्षे । यस्य पुष्पं त्रिकालमेव विकसति । रा.नि.व.१० ।

**सान्नाय्यम्** । क्ली । घृते, हविषि त्रिका. ।

**सान्निपातिकः** । पुं । त्रिदोषजरोगे । रा.नि. व.२१ । त्रि । त्रिदोषसम्बन्धिनि ।

**सान्निपातिकी** । स्त्री । सन्निपातजन्ययोनिरोगे । लक्षणं यथा—"...त्रिभिर्दोषैः योनिगर्भाशयाश्रितैः । यथास्वोपद्रवकरैर्व्यापत् सा सान्निपातिकी ॥" वा.उ.३३अ. ।

**साब्दी** । स्त्री । द्राक्षाविशेषे । शब्दकल्प. ।

**सामजः (योनिः)** । पुं । गजे । मे. ।

**सामलयम्** । क्ली । हरीतकी शुण्ठी गुडूच्येषु । वै.निघ. ।

**सामवातः** । पुं । आमयुक्तवातरोगे । लक्षणं—"वायुः सामो विबन्धाग्निसाद-तन्द्रान्त्रकूजनैः । वेदना-शोथ-निस्तोदैः क्रमशोऽङ्गानि पीडयेत् ॥" भा. । आमवाताख्यरोगे । तल्लक्षणम् यथा,—"अङ्गमर्दोऽरुचिस्तृष्णा आलस्यं गौरवं ज्वरः । अपाकः शूनताङ्गानामामवातस्य लक्षणम् ॥ स कष्टः सर्वरोगाणां यदा प्रकुपितो भवेत् ॥ हस्तपादशिरोगुल्फत्रिकजानूरुसन्धिषु । करोति सरुजं शोथं यत्र दोषः प्रपद्यते ॥ इत्यादि । मा.नि. ।

**सामान्यम्** । क्ली । एकत्वबुद्धिकारणानि । यदनेकासु भिन्नदेशकालासु गवादिव्यक्तिषु अयं गौरयं गौरित्यादिप्रकारा एकाकारा बुद्धिः तत् सामान्यम् । च.सू.१अ. ।

**सामिचन्द्रः** । पुं । योनिरन्ध्रावरके स्तोकदाल्यचर्मणि । "अधस्तात् योनिरन्ध्रस्य सम उन्द्रार्धसन्निभः । कौमारे प्रायशः सामिचन्द्रो नारीषु दृश्यते ॥"

**सामुद्गकः** । पुं । संपुटे । वा.उ.२९अ. ।

**सामुद्गसन्धिः** । पुं । श्रोणीगतसन्धिषु । भा. । अंसपीठगुदभगनितम्बेषु सन्धौ । सु.शा.५अ. ।

**सामुद्रम्** । क्ली । समुद्रज-लवणे । करकच, पाङा । हिं पांगा । तत्पर्यायाः,—सागरं शिकटं कटुकं सामुद्रं सामुद्रकं शिवं वशिरं सारास्य अक्षीवं लवणाब्धिजं । गुणाः—लघु उष्णं पलितजनकं पित्तकृत् दीपनं रुच्यञ्च । रा.नि.व.६ । समुद्रफेने । रस-रत्न-समुच्चयादिदृष्टम् । नारिकेले । द्वीपान्तरवचायाम् । ট্োপচিনি । वै.निघ. । पुं । मत्स्यविशेषे । सु.चाह्य.८अ. ।

**सामुद्रमत्स्यः** । पुं । तिमितिमिङ्गिलकुलिशपाकमत्स्यादिषु । तन्मांसगुणाः—गुरु स्निग्धं मधुरं नातिपित्तलं वातहरमुष्णं वृष्यं श्लेष्मवर्द्धनञ्च । सु.सू.४६अ. ।

**सामुद्राद्यचूर्णम्** । क्ली । उदराधिकारे चूर्णम् । সামুদ্রিলবণ, সচললবণ, সৈন্ধবলবণ, বনযমানী, যবক্ষার, বিড়ঙ্গ, হিঙ্গু, পিপুল, চিতামূল, শুঁঠ, প্রত্যেক চূর্ণ সমভাগ। ঘৃত দিয়া সেবন করিবে। वा.कौ. ।

**सामुद्रिका** । स्त्री । सविषजलायुकायाम् । সবিষ জোঁক । सु.सू.१३ । See जलायुका ।

**साम्ब(भ,म्बा)रम्** । क्ली । गाढ़लवणे । শাম্ভরি লবণ । रा.नि.व.६ ।

**साम्बरी** । स्त्री । रक्तलोध्रवृक्षे । श.च. ।

**सा[illegible]गणिकाईमम्** । क्ली । जवादिगन्धद्रव्यं । रा.नि.व.१२ । See जवादिः ।

**सारागिजम्** । क्ली । महापारेवतफले । रा नि.व.११ ।

**सायकः** । पुं । शरे । रा.नि.व.८ ।

**सायकपुङ्खा** । स्त्री । शरपुङ्खायाम् । सरपुंख । रा.नि व.४ ।

**सायङ्कालः** । पुं । सायाह्ने ।

**सायोङ्किदुरा** । स्त्री । मल्लिकाविशेषे । यः सायं विकसति । गुणैर्वार्षिकीतुल्या । रा.नि.व.१० ।

**सारः** । पुं । मज्जायां । শাঁস । मञ्जुश्री. १२अ. ; बल । दाडिम्बवृक्षे । वै.निघ.२भ. । प्रियालवृक्षे । दधि । शुद्धे । मृगे । क्वाथे । वै.निघ. । यवक्षारे । रा.नि.व६ । रोगे । पयसि । मद्ये । अम. । दधिसरे । দৈয়ের মাথা । श.च. । कर्पूरे । रा. नि.व१२ । गरुल. १२ अ. । नीलीवृक्षे । वै.निघ.२ भ.वा व्या. प्रत्यङ्गाख्यानि. । काष्ठान्तर्भूतपरिपक्वनिर्यासे । শুড়্না কাঠ । "तस्य निर्गतवेष्टकं लाक्षा स्वर्जरस-मोचरसादिकम् ।" च.सू.१अ. । सालसारे । सु.चि.१८अ. । लोहे । भा. । नवनीते । रा.नि.व.१५ । पानके । পানা, সরবত । देहान्तर्गतस्थिरपदार्थे, स चाष्टविधः—यथा त्वग्रक्तमांसमेदोऽस्थि-मज्जा-शुक्र-सत्त्वानि । तत्र स्निग्धत्वचा-

स्थूलतालः। पुं। हिन्तालि। হেঁতাল। रा. नि.व.९।

स्थूलतिक्ता। स्त्री। दार्व्व्याम्। দারুহরিদ্রা। वै.निघ.।

स्थूलतिन्दुकः। पुं। काकतिन्दुके। মাকড়া-গাব। वै.निघ.।

स्थूलत्वचा। स्त्री। काश्मर्य्याम्। গাগার গাছ। रा.नि.व.९।

स्थूलदण्डः। पुं। देवनाले। মহানল। रा. नि.व.८

स्थूलदर्भः। पुं। मुञ्जतृणे। মুঁজ। रा.नि.व.८।

स्थूलदला। स्त्री। गृहकन्यायाम्। ঘৃতকুমারী। रा.नि.व.५।

स्थूलनालः। पुं। देवनाले। বড় নল। रा. नि.व.८।

स्थूलनासः (सिकः)। पुं। शूकरे। हे.च.। त्रिका.।

स्थूलनिम्बुः (कः)। पुं। महानिम्बुवृक्षे। वै.निघ.।

स्थूलनीलः। पुं। श्येनपक्षे। বাজ। वै.निघ.।

स्थूलपटः। पुं। कार्पासे। श.र.।

स्थूलपट्टाकः। पुं। स्थूलवस्त्रे। श.र.।

स्थूलपत्रः। पुं। दमनकवृक्षे। দনা। रा.नि. व.१०। सप्तपर्णवृक्षे। ছাতিম গাছ। वै.निघ.।

स्थूलपर्णी। स्त्री। सप्तपर्णवृक्षे। ছাতিম গাছ। वै.निघ.।

स्थूलपादः। पुं। गजे। त्रि। श्लीपदरोगिणि। वै.निघ.।

स्थूलपुष्पः। पुं। वकवृक्षे। বকফুলের গাছ। र. मा.। प.मु.। झुण्टुक्षुपे। रा. नि.व.५। स्त्री (ष्पा)। पार्व्वतीयापराजितायाम्, आस्फोतायाम्। হাপর-মালী। र.मा.।

स्थूलपुष्पी। स्त्री। यवतिक्तालतायाम्। रा. नि.व.२१।

स्थूलप्रियङ्गुः। स्त्री। वरकाख्यधान्ये। কামিনী-ধান। वै.निघ.।

स्थूलफलः। पुं। शाल्मलिवृक्षे। रा.नि.व.८। महानिम्बूवृक्षे। বড় নেবুর গাছ। वै.निघ.।

स्थूलफला। स्त्री। शणपुष्प्याम्। শণ। रा नि.व.४। शाल्मलीवृक्षे। শিমুল গাছ। रक्तफल-वृक्षे। वै.निघ.।

स्थूलभण्टाकी। स्त्री। महावृहतीक्षुपे। বড়-বৃহতী। मद.व.१।

स्थूलमरिचम्। क्ली। कक्कोलके। কক্কোল। रा नि.व.१२।

स्थूलमूल(क)म्। क्ली। चाणक्यमूलके। চামার আলু। रा नि.व.७।

स्थूलवर्त्म (न्)। क्ली। दुष्टवर्त्मरोगभेदे।

स्थूलवर्त्मकृत्। स्त्री। भार्ग्याम्। বামনহাটী। श.च.।

स्थूलवर्व्वु(र्बु)रिका। स्त्री। महावर्व्वुरवृक्षे। বড় বাবুলা। "स्थूलवर्व्वुरिकापत्ररसः पानाद्धि-पीडति। सर्व्वातिसारान्......।" शार्ङ्ग.म.१भ.।

स्थूलवल्कलः। पुं। रक्तलोध्रे। जटा.।

स्थूलवृक्षः। पुं। महावकुलवृक्षे। वै.निघ.।

स्थूलवृक्षफलः। पुं। स्निग्ध-पिण्डीतकवृक्षे। ময়না-বৃক্ষবিশেষ। रा.नि.व.८।

स्थूलवैदेही। स्त्री। गजपिप्पल्याम्। গজ-পিপ্পলী। रा.नि.व.६।

स्थूलशरः। पुं। शरविशेषे। स मालवदेशे तन्नाम्ना ख्यातः। রামশর, মোটা শর। तत्-पर्य्यायाः,—महाशरः इक्षुरकः क्षुरपत्रः बहुमूलः दीर्घमूलकः स्थूलशायकः। गुणाः—मधुरः सुतिक्तः वाक-भ्रान्ति-तापहरः बल-वीर्य्यकरः नित्यसेवनेन वृष्यदातकरश्च। रा.नि.व.८।

स्थूलशालिः। पुं। शालिधान्यविशेषे स्वनाम-ख्याते। মোটা হৈমন্তিক ধান। गं वड़ीशालि। कं दोड्डनेल्लु। तत्पर्य्यायाः,—महाशालिः स्थूलाङ्गः स्थूलतण्डुलः। गुणाः—स्वादुः मधुरः शीतलः पित्तशमनः जीर्णज्वरदाहजठररोगघ्नः बालवृद्धयूनां हितः अग्निबलवीर्य्यकरश्च। रा.नि.व.१६।

स्थूलशिम्बः। पुं। असितशिम्ब्याम्। रा.नि व.७।

**स्नुग्दलम्** । क्ली । मनसापत्रे । मनसापाता । रस.र.वात-चि. । पुं । स्नुहीवृक्षे । मनसा गाछ वा तेकाँटा सिज् । श.च. ।

**स्नुषा** । स्त्री । पुत्रभार्य्यायाम् । पुत्रवधू । वा. चि.६८. । स्नुहीवृक्षे । मनसा सिज्, तेकाँटा सिज् । श.च. ।

**स्नुहा (हिः, ही)** । स्त्री । ( Euphorbia neriifolia. Syn. E. Ligularia Euphorbia antiquorum. ) स्वनामख्यात-क्षीरसारवृक्षे । वृक्षविशेषे । मनसा गाछ, घोड़ा सिज्, तेकाँटा सिज् । हिं थोहर, सिंधार, नागफनिया । तै चेमुड़चेट्टु । बम्. निवडुंग । तत्-पर्य्यायाः,—सीहुण्डः सिहुण्डः सीहुण्डः वज्रद्रुः स्नुक् समन्तदुग्धा नागद्रुः बहुदुग्धिका महावृक्षः शला-वच्चः स्नुहिः गुड़ः गुडा गुड़िः गुल्मा वज्रद्रुमः वज्री सुधा क्षीरसारः धारुमालः दण्डवृक्षः वज्र-कण्टकः । र.मा. । सं.कुष्ठ.चि.नरिसाद्यतैलि । गुणाः—उष्णा पित्तदाहघ्नी कुष्ठ-वात-प्रमेहघ्नी च । तत्क्षीरं वातविषाध्मानगुल्मोदरघ्नञ्च । रा.नि.व.८ । "बहुदोषे प्रयोक्तव्यमग्नितुल्ये सुधापयः ।" राज. । विरेचने च प्रशस्तं । च.सू.१८. । सु.चि.१४म. ।

**स्नुहाद्यतैलम्** । क्ली । खालित्ये तैलम् । टाकेर तैल । पाठः—"स्नुहीपयः पयोऽर्कस्य मार्कवो लाङ्गलीविषम् । मूत्रमाजं गवीमूत्रं रक्तिका सेन्द्र-वारुणी । सिद्धार्थं तीक्ष्णतैलञ्च गर्भं दत्त्वा विपाचयेत् । वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥" लाङ्गलीविषं लाङ्गलीमूलं, रक्तिका गुञ्जाफलं, तीक्ष्णतैलं नयाकुटकीतैलं । क्वचित्तु सिद्धार्थतीक्ष्ण-तैलमिति श्वेतसर्षपतैलं वदन्ति । र.र. ।

**स्नुहीदलम्** । क्ली । स्नुहीवृक्षपत्रे ।

**स्नुहीवीजम्** । क्ली । स्नुहीवृक्षबीजे । मनसा-बीज । सं.कनकतैलि ।

**स्नुह्यम्** । क्ली । उपले । हेलाकुन । त्रिका. ।

**स्नु(ही)क्षीरम्** । क्ली । स्नुहीवृक्षनिर्य्यासे । सिजुर आटा । सु.सू.३८अ. । सं.वाहुशालगुड़े ।

**स्नेहः** । पुं । दुग्धसारे । वै.निघ. । मस्तिष्के । रा.नि.व.१८ । सर्षपे । भा.पू.१म.धा.व. । स्निग्ध-त्वगुणयुक्तद्रव्ये, घृतादौ । सु.सू.४१अ. । स चतुर्विधः घृततैलवसामज्जान इति । च.सू.१अ. । स्नेहः स्थावरजङ्गमभेदेन द्वियोनिः । तयोस्तैलं स्थावरयोनिः, घृतञ्च जङ्गमयोनिः । तत्पानसमयो रवेरुदयात् किञ्चिदनन्तरम् । तत्पानञ्च शीते दिवा, ग्रीष्मे रात्रौ, वातपित्ताधिके रात्रौ, वात-श्लेष्माधिके च दिवा हितम् । इति कौशलं, तैलं रूपः, वसामज्जौः मध्यमतुर्यम् । भा. । स्नेह-प्रयोगविधिः— "स्नेह्यास्तीक्ष्णास्यस्त्रीव्यायामासक्त-चित्तकाः । वृद्धबालावलकृशा रूक्षाः क्षीणास्ररेतसः । वातार्त्तस्यन्दतिमिरदारुणप्रतिबोधिनः । स्नेह्या न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः । ऊरुस्तम्भाति-साराममलरोगगरोदरैः । मूर्च्छा-च्छर्द्द्यरुचि-श्लेष्म-तृष्णा-मद्यैश्च पीड़िताः ॥" तस्य सप्तदिनपर्य्यन्तः कालः । स त्रिविधः उत्तममध्यमाधमभेदेन । तत्र दिनत्रयपर्य्यन्तमधमः, दिनचतुष्टयपर्य्यन्तं मध्यमः, सप्तदिनपर्य्यन्तमुत्तमः, गुणाः—"स्नेहोऽनिलं हन्ति मृदूकरोति देहम् मलानां विनिहन्ति सङ्गम् । स्निग्धस्य सूक्ष्मेष्वयनस्य लीनं ...... ॥" च.सि.१ अ. । स्नेहमात्रा—"उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे । जघन्यस्य पलार्द्धेन स्नेहक्वाथौषधेषु च ॥" च.द. । स्नेहपाकविधिः—"क्वाथ्याच्चतुर्गुणम् वारि पादस्थं स्याच्चतुर्गुणम् । स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः । चतुर्गुणन्त्वष्टगुणं द्रवद्वैगुण्यतो भवेत् । यत्र द्रवान्तरानुक्तौ क्षीरमेव चतुर्गुणम् । द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत् ॥" अन्यत् —"जलमष्टगुणं क्वाथ्यात् क्वाथ्यं चाष्टपादिकः । क्वाथ्याच्च पादिकः स्नेहः स्नेहात् कल्कस्तु पादिकः ॥ पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ । तत्र स्नेह-समान्याहुर्वार्क् च स्याच्चतुर्गुणम् ॥" अन्यच्च— "एकद्वित्रिद्रवद्रव्यैः कुर्य्यात् स्नेहाच्चतुर्गुणम् । क्षीरं स्नेहसमं देयं चतुर्भिश्च चतुर्गुणम् । कल्काच्चतुर्गुणः स्नेहः स्नेहाच्चैव चतुर्गुणम् । क्वाथ्याच्चतुर्गुणं वारि क्वाथः क्वाथसमो भवेत् । तत्स्नेहोपधानाञ्च प्रमाणं यत्र नेरितं । पादः स्याद्दीपचं स्नेहात् स्नेहात् तोयं चतुर्गुणम् । पुष्पादिकुसुमात् कल्कः केवलं स्नेह-सिद्धये ॥ यदीरितः स्नेहपादार्द्धः स्नेहकार्य्ये मनीषिभिः । स्नेहे सिध्यति शुद्धाम्बुनिः क्वाथस्वरसैः क्रमात् । कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् । स्वरसक्षीर-माङ्गल्यैः पाको यत्रेरितः क्वचित् । जलं चतुर्गुणं तत्र वीर्य्याधानार्थमावपेत् (माङ्गल्यं दधि) । न मुञ्चति रसं द्रव्यं क्षीरादिभिरुपस्कृतम् । सम्यक् पाको न जायेत तस्मात्तोयं चतुर्गुणम् । स्नेहपाकविधौ यत्र 'क्षीर-मेकन्तु कथ्यते । तोयादीनामनिर्द्देशे क्षीरमेव चतु-

**स्नेहविद्धः (द्रुमः)।** पुं। तैलदेवदारुवृक्षे। तैलमेवदारु। वै.निघ.। भटा.।

**स्नेहबीजः।** पुं। पियालवृक्षे, चारवृक्षे। पियाल गाछ। रा.नि.व.११।

**स्नेहव्यापत्।** स्त्री। स्नेहातियोगजनित-विकारे। सु.।

**स्नेहसारः।** पुं। मज्जधातौ। मज्जा। वै.निघ.।

**स्नेहा (न्) (हुः)।** पुं। चन्द्रे। रोगे। उणा.।

**स्नेहोत्तमम्।** क्ली। तैले। वै.निघ.।

**स्पन्दः (नम्)।** पु. क्ली। कम्पने। मा.नि.।

**स्पन्दनाह्वयः।** पुं। तिन्दुकवृक्षे।

**स्परिशः।** पुं। स्पर्शे। शब्दकल्पः।

**स्पर्शः।** पुं। त्वाचप्रत्यक्षे। रोगे। दाने। चिका.। मणिविशेषे। परशपाथर। शब्दकल्पः।

**स्पर्शनः।** पुं। वायौ। रा.नि.व.११। क्ली। स्पर्शे। मे.।

**स्पर्शमणिः।** पु। मणिविशेषे। परशपाथर। शब्दकल्पः।

**स्पर्शमणिप्रभवम्।** क्ली। स्वर्णे। ग.र.।

**स्पर्शलज्जा।** स्त्री। लज्जालुकायाम्। लज्जा-वती। रा.नि.व.५।

**स्पर्शशुद्धा।** स्त्री। शतमूल्याम्। शतमूली। श.च.।

**स्पर्शसङ्कोचपत्रिका।** स्त्री। श्वेतलज्जालु-कायाम्। श्वेत लज्जावती। वै.निघ.।

**स्पर्शस्यन्दः।** पु। भेके। भेंक। शब्दकल्पः।

**स्पर्शहानिः।** स्त्री। शुकरोगविशेषे। 'जनयेत् स्पर्शहानिन्तु शोणितं शुकदूषितम्।" सु.नि.१४अ.।

**स्पृक्का।** स्त्री। तन्नामकसुगन्धशाके। पिड़िं शाक। मं स्पृक्का नं दिक्क। तं सुक्कुयमेंडुद्रव्यमु। तद्गुणाः—कटुः कषाया तिक्ता कफ-कासघ्नी श्लेष्मपित्तास्रमूत्रकृच्छ्रेषु हिता च। रा.नि.व. १२। सु.सू.३८अ.। लज्जालुकायाम्। रा.नि.व. ५। वा.सू.१८अ. एलादिः। "स्पृक्कापौरकचोच-पत्रतगरम्।" वै.निघ.२भ.चय.चि.मार्कवादिचूर्णे। ब्राह्म्याम्। विर्मी शाक। मालत्याम्। मालती फूल। शतपत्र्याम्। सेउति। पाचीनामपुष्पवृक्ष विशेषे। वै.निघ.।

**स्पृशा।** स्त्री। सर्पकङ्कालिकावृक्षे। श.च.। (शा,शी)। कण्टकार्य्याम्। श.र.। प.मु.।

**स्पृष्टरोदनिका।** स्त्री। समङ्गायां। लज्जा-वती। सु.चि.२५अ.ऊ.।

**स्पृष्टास्पृष्टि।** अ। परस्परस्पर्शने। छोंउया-छुंयि। शब्दकल्पः।

**स्पृष्टिः।** स्त्री। स्पर्शने। अम.।

**स्पृहा।** स्त्री। इच्छायाम्। भुजङ्गघातिनीवृक्षे।

**स्पृह्यः।** पु. मातुलुङ्गवृक्षे। श.च.।

**स्फटः (टा)।** पु, स्त्री। सर्पफणायाम्। अम.।

**स्फटिकः।** पु। सूर्य्यकान्तमणौ। उणा.। स्वनामख्यातमणौ। स्फटिक। तत्पर्य्यायाः,—स्फटिकात्मा स्फटिकं स्फाटिकं स्फाटीकं स्फटिको-पलः स्फाटिकोपमः भासुरः शालिपिष्टं धौतशिलं शितोपलः विमलमणिः निर्म्मलोपलः स्वच्छः शम्भु-मणिः अमरत्वं शिवप्रियं शिवप्रियं। गुणाः— पित्तदाहरोगघ्नः रक्तशमवीर्य्यदः। एतज्जपमालया जपतां कोटिगुणं फलं भवति। रा.नि.व.१३। स्फटिकारी। फटकिरि। भा. ४अ.त्रै.रो.चि.। "स्फटिकशङ्खनाभीन्दवः।" कर्पूरे। वै.निघ.।

**स्फटिकाविषम्।** क्ली। दारमोचमिदं। सं.।

**स्फटिका (ख्या)।** स्त्री। स्फटिकारिकायां। फटकिरि। भा.। सं.रसकर्पूरे।

**स्फटिकात्मा (न्)।** पुं। स्फटिके। श.प.।

**स्फटिकाद्रिभिदः**<br>**स्फटिकाभ्रः** } पुं। कर्पूरे। शब्दकल्पः। रा.नि.व.१२।

**स्फटिकारिः।** स्त्री। स्वनामख्यातखनिजोप-रसे। फटकिरि। हि फिटिकारी। तत्पर्य्यायाः, —स्फटिका स्फटी स्फुटिका श्वेता शुभ्रा रङ्गदा रङ्गदृढा दृढरङ्गा रङ्गाङ्गा दृढरङ्गदायी। गुणाः —कषाया उष्णा वातपित्तकफव्रणघ्नी श्वित्रविसर्पघ्नी योनिसङ्कोचकारिणी प्रदर मेहकृच्छ्र-वामधोप-दाप-नाशिनी। भा.पू.१भ.उ.रसव.।

**स्फटिकोपमः।** पुं। कर्पूरे। पद्मदे। पद्मा। चन्द्रकान्तमणौ। वै.निघ.।

**स्फटिकोपलः।** पुं। स्फटिके। व.निघ.।

**स्फटी।** स्त्री। स्फटिकारी। फटकिरि। भा.।

**स्फाट(टि,टी)कम्।** क्ली। स्फटिके। श.र.।

स्फाटिकोपलः । पुं । स्फटिके । विका० ।
स्फिक् (च्) । स्त्री । कटिप्रोथे । गुदपूला । रा०नि०व०१८ ।
स्फिक्घातनकः । पुं । कट्फलवृक्षे । श०च० ।
स्फुटकपचम् । क्ली । ज्योतिष्मतीपत्रे । लता-फट्किर पाता । च०द०पाल०चि० । प्रयोगा० ।
स्फुटत्वचा । स्त्री । ज्योतिष्मत्यां । लताफट्किं । वै०निघ० ।

स्फुटनम् । क्ली । विसरणे । श्रम० ।
स्फटफलः । पुं । तुम्बुरौ । ताम्बूल । वै०निघ० ।
स्फुटबन्धना (नी) । स्त्री । पारावतपद्यां । लताफट्की । प०मु० ।
स्फुटवल्कली । स्त्री । पारावतपद्यां । लता-फट्की । र०मा० ।
स्फुटा । स्त्री । फणायाम् । भ०टी०रा० ।
स्फुटिः (टी) । स्त्री । स्फुटितकर्कटिकायाम् । फुटी । पादस्फोटरोगे । हारा० । श०र० ।
स्फुटिका । स्त्री । स्फटिकारिकायां । फट्किरि । वै०निघ० ।
स्फुटितम् । क्ली । काण्डभग्नास्थिभङ्गरोगे । "ग्रकपूर्णमिवाघातं विपुलं विस्फुटीकृतमिति" लक्षणम् । सु० ।
स्फुल्(ल्ला)रः । पुं । अग्नौ । श०च० । फुत्कारे । फूँ देओया ।
स्फुरः । पुं । स्फुरणे । फलके । भा०टी० ।
स्फुरणः । पुं । वायौ । क्ली । ईषत्स्पन्दने । कम्पे । म० ।
स्फूर्जकः(नः) । पुं । तिन्दुकवृक्षे । कुचिला गाछ । प०मु० । लकुचाकारपत्रकाण्डे ग्रीष्मक-वृक्षे । सु०सू०३८म० ।
स्फूर्जथुः । पुं । सण्डुलीयशाकभेदे । काँटा-नटे शाक । रा०नि०व०५ ।
स्फूर्जनकः । पुं । नन्दीवृक्षे । वै०निघ० ।
स्फुर्त्तिः । स्त्री । स्फुरणे । कम्पने । व्याख्या० ।
स्फोटः । पुं । विस्फोटके । फोड़ा । रा०नि०व० २० । सूक्ष्मायाम् । वै०निघ० ।

स्फोटकः । पुं । पक्षिविशेषे । विस्फोटके । फोड़ा । रा०नि०व०२० ।
स्फोटकरः । पुं । भल्लातकवृक्षे । वै०निघ० ।
स्फोटनम् । क्ली । विदारणे । स्फोटनवद्-वायु-जन्यव्रणवेदनायाम् । सु०सू०२२म० ।
स्फोटलता । स्त्री । कर्णस्फोटालतायाम् । कार्ण छिड़ा । रा०नि०व०३ ।
स्फोटवीजकः । पुं । भल्लातकवृक्षे । भेला-गाछ । रा०नि०व०११ ।
स्फोटहेतुः (कः) । पुं । भल्लातकवृक्षे । भेला-गाछ । वै०निघ० ।
स्फोटा । स्त्री । फणायाम् । शब्दकल्प: ।
स्फोटिका । स्त्री । स्फोटके । फोड़ा । क्षायु-विकारपक्षिणि । विका० ।
स्फोटिनी । स्त्री । कर्कटिकालतायाम् । वै० निघ० ।
स्फोता । स्त्री । श्वेतोत्पलशारिवायाम् । अनन्त-मूल । भा०पू०१भ० । See अनन्ता ।
स्मरकूपकः (पिका) । पुं, स्त्री । भगे । स्मरगृह(च्छत्रम् । क्ली । भगे । योनौ । जटा० । शब्दकल्प: ।

स्मरणम् । क्ली । स्मृतौ । है०च० ।
स्मरणापत्यतर्पकः । पुं । कच्छपे । शब्दकल्प: ।
स्मरध्वजम् । क्ली । योनौ । श०र० । लिङ्ग ।
स्मरमन्दिरम् । क्ली । भगे । रा०नि०व०१८ ।
स्मरलेखनी । स्त्री । सारिकापक्षिणि । श०र० ।
स्मरवृद्धिः (संज्ञः) । पुं । कामवृद्धिवृक्षे । रा० नि०व०४ ।
स्मरस्तम्भः । पुं । लिङ्गे । विका० ।
स्मरस्मरा । स्त्री । वनमल्लिकायाम् । वनमालि । रत्ना० ।
स्मरस्मर्य्यः । पुं । गर्दभे । विका० ।
स्मरागारम् । क्ली । भगे, योनौ । विका० ।
स्मराङ्कुशः । पुं । लिङ्गे । विका० । नखे ।
स्माधिवासः । पुं । अशोकवृक्षे । अशोक-फूलेर गाछ । रा०नि०व० १० ।

**स्मरास्र:** । पुं । राजाम्रे । শাম আম্। रा.नि.व.११ ।

**स्मरासव:** । पुं । तालसुरायाम् । তালের মদ । शब्दकल्प: । लालायाम् । विका. ।

**स्मारणी** । स्त्री । ब्राह्मणाग । বির্ণী শাক । वै.निघ. ।

**स्मृति:** । स्त्री । अनुभूतार्थस्मरणे । च.सू.१८. सा चाष्टविधकारणेभ्य: समुत्पद्यते यथा—"वक्ष्यन्ते कारणान्यष्टौ स्मृतिर्यैरुपलभ्यते । निमित्तरूपग्रहणात् सादृश्यात् सविपर्य्ययात् । सत्त्वानुबन्धाम्। भ्यासात् स्मृतिरुच्यते ॥" च.शा.१अ. ।

**स्मृतिहिता** । स्त्री । शङ्खपुष्पीलतायाम् । শঙ্খপুষ্পীফুলের লতা । वै.निघ. ।

**स्मेरविष्किर:** । पुं । मयूरे । शब्दकल्प:

**स्यद:** । पुं । वेगे । अम. ।

**स्यन्द:** । पुं । क्षरणे । व्याक. ।

**स्यन्दनम्** । क्ली । जले । क्षरणे । मे. ।

**स्यन्दन:** । पुं । तन्नामकवृक्षे । तिनिश, सादन इति पाश्चात्ये । সাদন গাছ । भा.म.पूतना. चि । "स्यन्दनोऽर्जुन एव च ।" च.चि.३अ. । चि.८अ. । तिन्दुकवृक्षे । তেঁদ গাছ । वै.निघ. ।

**स्यन्दनतैलम्** । क्ली । भगन्दरे तैलम् । पाठ: —"चित्रकार्कौ त्रिवृत्पाठे मलपूं हयमारकम् । सुधां वचां लाङ्गलकीं समपर्णं सुवर्चिकाम् । ज्योतिष्मतीञ्च सम्भृत्य तैलं धीरो विपाचयेत् । एतद्धि स्यन्दनं तैलं भृशं दद्याद्भगन्दरे ॥" सु.चि.८अ. ।

**स्यन्दनद्रु: (म:)** । पुं । तिनिशद्रुमे । সাদন গাছ । रा.नि.व.९ ।

**स्यन्दनाह्वय:** । पुं । तिनिशवृक्षे । तिन्दुकवृक्षे । তেঁদ গাছ । वै.निघ. ।

**स्यन्दनि:** । पुं । तिनिशवृक्षे সাদন গাছ ।

**स्यन्द(न्दि)नी** । स्त्री । मुखलालायां । লাল। रा.नि.व.१८ । तिनिशवृक्षे । সাদন গাছ । र.सा.सं.मूत्रवहनाड्यां । कश्चित् ।

**स्यन्दिता** । स्त्री । तिन्दुकवृक्षे । তেঁদ গাছ ।

**स्यमीक:** । पुं । वल्मीके । উইঢিপি । वृक्षभेदे । শাঁইগাছ । मे. । स्त्री (का) । नीलिकायाम् । मे. ।

**स्युमम्** । क्ली । जले । उषा ।

**स्योनाक:** । पुं । श्योणाकवृक्षे । শোণা গাছ । वै.निघ. ।

**स्रंस:** । पुं । पूगवृक्षे । গুপারিগাছ । वै.निघ. ।

**स्रंसनम्** । क्ली । विरेचने । "पक्तव्यं यदपक्त्वैव श्लिष्टकोष्ठे मलादिकं । नयत्यध: स्रंसनं तद् यथा स्यात् कृतमालकम् ॥" "क्षिप्रोऽभिनोदिते गुल्मे दैहिके संसनं हितम् ।" सेप.गुल्मचि. । कर्षणदोषसाध.करणे । सु.च. ।

**स्रंसिनीफल:** । पुं । शिरीषवृक्षे । श.मा. ।

**स्रंसी (इन्)** । पुं । पीलुवृक्षे । আক্রোট । भा. । पूगवृक्षे । গুপারি গাছ । वै.निघ. ।

**स्रक् (ज्)** । स्त्री । मालायां । ফুলের মালা ।

**स्रद्रु:** । स्त्री । अपानवायुनि:सरणे, वातकर्मणि । शब्दकल्प: ।

**स्रव:** । पुं । मूत्रे । रा.नि.व.१८ ।

**स्रवणम्** । क्ली । मूत्रे । रा.नि.व.१८ । घर्मे । क्षरणे । श.र. । व्याक. ।

**स्रवत्तोया** । स्त्री । रुदन्तीवृक्षे । रुदन्तीति लोके । वै.निघ. ।

**स्रवद्गर्भा** । स्त्री । पतितगर्भायां गवि । अम. ।

**स्रवन्ती** । स्त्री । ओषधिविशेषे, द्रावन्त्याम् । মৃগুরী । मे. । नद्यां ।

**स्रवन्तीपतिफेन:** । पुं । समुद्रफेणे । सं.प्रीह.चि.महाद्रावके ।

**स्रवा** । स्त्री । जीवन्त्यां । वै.निघ. । मूर्व्वायाम् । अ.टी.रा. ।

**स्रष्टा (ष्टृ)** । पुं । वैद्ये । वै.निघ. । ब्रह्मणि ।

**स्रस्ताङ्गता** । स्त्री । शिथिलाङ्गतायां । नि:सहायावयवतायां । मा.ज्व.नि. ।

**स्राव:** । पुं । क्षरणे, निस्यन्दे । रसे । निर्यासे । আঠা । वै.निघ. ।

**स्रावकम्** । क्ली । मरिचे । श.च. ।

**स्रावणिका (णी)** । स्त्री । कटभी । शब्दकल्प: । सुण्डीर्य्यां । মৃগুরী । भा.म.कुष्ठ.चि. ।

**स्रावी (इन्)** । पुं । कर्णपालीगतरोगे । सु.सू.१६.अ. ।

**स्राव्य:** । त्रि । स्रावयार्हे, विद्रध्यादौ । वैद्यकम् ।

**स्राव्युदरम्** । क्ली । परिस्राव्युदरनाम्ना प्रसिद्धे पतोदर-रोगे ।

**स्रुग्दारुः** । पुं विकङ्कतवृक्षे । बँइँचो गाछ । र.मा. ।

**स्रुघ्नी** । स्त्री । स्वर्जिकाक्षारे । साजिमाटी । हे.च. ।

**स्रुता** । स्त्री । हिङ्गुपत्र्याम् । श.च. ।

**स्रुवतरुः (द्रुमः)** । पुं । विकङ्कतवृक्षे । बँइँचो गाछ । वै.निघ. । रा.नि.व.९ ।

**स्रुव(वा)वृक्षः** । पुं । विकङ्कतद्रुमे । बँइँचो गाछ । रा.नि.व.९ । वा.सू.१५अ.आरग्वधादि. । "निम्बाम्रतामधुरशासवङ्घपाठः ।"

**स्रुवा** । स्त्री । शल्लकीवृक्षे । मे. । मूर्व्वायाम् । मूर्गा । प.मु. ।

**स्रोतः (स्)** । क्ली । जलवेगे । मे. । छिद्रे । रा.नि.व.१८ । देहस्थनवद्वारेषु । "येभ्यो देहस्य मलादयः स्रवन्ति तानि स्रोतांस्युच्यन्ते ।" भा. । अन्यच्च—"मूलात् खादन्तरं देहे प्रसृतन्त्वभिवाहि यत् । स्रोतस्तदिति विज्ञेयं शिराधमनिवर्जितम् ॥" सु.शा.९अ. । तानि नव श्रवणनयनवदनघ्राणगुदमेढ्राणि नराणां बहिर्मुखान्येतान्येव स्त्रीणामपराणि च त्रीणि, द्वे स्तनयोरधस्ताद्रक्तवहञ्च । सु.शा.५अ. । इन्द्रिये । मे. ।

**स्रोतःपाकः** । पुं । मुख-नासिकादिस्रावे । मा.नि. ।

**स्रोतोजः** । पुं । जलवेतसे । क्ली । स्रोतोऽञ्जने, सौवीराञ्जने । वै.निघ. ।

**स्रोतोऽञ्जनम्** । क्ली । सौवीराञ्जने । श्वेत सुर्मा । भा. । सु.सू.३८अ.प्रियङ्ग्वादि.ड. स्वनामख्याताञ्जनविशेषे । जलाञ्जन, काल सुर्मा । तत्पर्य्यायाः,—सौवीरं कापोताञ्जनं यामुनं नदीजं पीतसारि वारिभवं स्रोतोनदीभवं स्रोतोभवं सौवीरसारं कपोतसारं कापोतसारं वल्मीकशीर्षम् । र.मा. । सु.चि.१०अ. । तत् श्वेतकृष्णलोहितभेदेन त्रिधा । लक्षणं—"वल्मीकशिखराकारं भिन्नमीलाञ्जनप्रभम् । घृष्टे च गैरिकाभं श्रेष्ठं स्रोतोऽञ्जनञ्च तत् ॥" गुणाः—शीतलं कटु कषायं कृमिघ्नं रसायनं रसे योग्यं सत्यवृद्धिकरञ्च । रा.नि.व.१३ । "तत्र स्रोतोऽञ्जनं कृष्णं सौवीरं श्वेतमीरितम् । स्रोतोऽञ्जनसमं ज्ञेयं सौवीरं तत्तु पाण्डुरं । स्रोतोऽञ्जनं स्मृतं स्वादु चक्षुष्यं कफपित्तनुत् । कषायं लेखनं स्निग्धं ग्राहि छर्द्दिविषापहं । सिध्मक्षयास्रहृच्छीतं सेवनीयं सदा बुधैः ॥ किन्तु द्वयोरञ्जनयोः श्रेष्ठं स्रोतोऽञ्जनं स्मृतम् ।" भा. ।

**स्रोतोनदीभवम्** । क्ली । स्रोतोऽञ्जने । वै.निघ.

**स्वः** । पुं । आत्मनि । क्ली । स्वर्गे । त्रिका. ।

**स्वकुलक्षयः** । पुं । मत्स्ये । हे.च. ।

**स्वगुप्ता** । स्त्री । शूकशिम्ब्याम् । আলকুশী । श.र. । वै.निघ.कास.चि.मूपणादिवृते । भा.म.४भ.मू.कृ.चि. । लज्जालुकायाम् । रा.नि.व.५ ।

**स्वटङ्कः** । पुं । कलिकारपक्षिणि । जटा. ।

**स्वग्रहः** । पुं । बालरोगभेदे । निदा. ।

**स्वच्छः** । पुं, क्ली । स्फटिके । रा.नि.व.१३ । बदरवृक्षे । कुल गाछ । रा.नि.व.११ । क्ली । रौप्यमाक्षिके । विमलानामोपधातौ । मौक्तिके । रा.नि.व.१३ । अभ्रधातौ । वै.निघ. । त्रि । रोगमुक्ते । श.र ।

**स्वच्छधातुः** । पुं । कर्पूरकमणौ । रौप्यमाक्षिके । वै.निघ. ।

**स्वच्छन्दभैरवः** । पुं । रसोऽयं सन्निपातादिनवज्वरे हित. । पाठः—"ताम्रभस्म विषं हिङ्गुः समधा भावितं रसैः । गुञ्जार्द्धं सन्निपातादिनवज्वरहरं परम् ॥" তামা, বিষ সমভাগ ; ধুতুরা-পত্ররসে ৭ বার ভাবনা দিবে । द्वितीय.—"रसगन्धकयोः शाणं शाणं कज्जलीकृतं । सुवर्णमाक्षिकं शाणं गुञ्जैकत्र कारयेत् । रुद्रजटा निर्गुन्दी च नागदामलकी तथा । विषकण्टालिका चैषां स्वरसं शाणशाणकम् । दत्त्वा संशोध्य संमर्द्य कार्य्या मुद्गसमा वटी ।" अनु. आर्द्रकरसेन पेया । পারদ, গন্ধক, ও স্বর্ণমাক্ষিক প্রত্যেক ৩২ রতি । রুদ্রজটা, নিশিন্দা, হরীতকী, আমলা এবং বিষকাটালিয়া প্রত্যেকের ৩২ রতি রসে সংশোধন করিয়া মর্দ্দনপূর্ব্বক মুগপ্রমাণ বটী করিবে । र.सा.सं. । अन्यो ज्वरे—"समभागाय संगृह्य पारदामृतगन्धकान् । जातीफलस्य भागार्द्धं दत्त्वा कुर्य्याच्च कज्जलिम् । सर्व्वार्द्धं पिप्पलीचूर्णं स्वज्ञयित्वा विभावयेत् । गुञ्जाद्वयं ततश्चापि नागवल्लीदलैः सह ॥" পারদ, বিষ, ও গন্ধক প্রত্যেক ২ তো জায়ফল ১ তো. পিপুল-

चूर्ण ৩৷৹ তো.। भैष.। अन्यच्च वातव्याधौ—"शुद्धसूतं मृतं लौहं ताप्यगन्धकतालकम्। पथ्याग्निमन्थ-निर्गुण्डी तूषणं टङ्कणं विषम्। तुल्यांशं मर्दयेत् खल्ले दिनं निर्गुण्डिकाद्रवैः। मुण्डीद्रावैः दिनैकन्तु द्विगुञ्जा वटकीकृताम्॥" शुद्धपारा ও গন্ধক, লৌহভস্ম, স্বর্ণমাক্ষিক, হরীতকী, আগগন্ধ, নিশিন্দামূল, শুঁট, পিপুল, মরিচ, সোহাগার খই, ও বিষ প্রত্যেক সমভাগ; নিশিন্দার ও আদার রসে একদিন মাড়িয়া ২ রতিপরিমাণ বটী করিবে। रस.र.।

**स्वच्छपत्रम्**। क्ली। अभ्रक-धातौ। অভ্র। हे.च.।

**स्वच्छवालुकम्**। क्ली। विमलधातौ। रा.नि.व.१३।

**स्वच्छमणिः**। पुं। स्फटिके। रा.नि.व.१३।

**स्वच्छा**। स्त्री। श्वेतदूर्व्वायाम्। रा.नि.व.८।

**स्वजम्**। क्ली। रुधिरे। मे.। पुं। पुत्रे। घर्म्मे। मे.। स्त्री (जा)। कन्यायां। त्रि। आत्मजाते।

**स्वजः**। पुं। अन्यमनुष्ये। शब्दकल्प.।

**स्वदनम्**। क्ली। भोजने। हे.च.। लौहे। रा.नि.व.१३।

**स्वदिः**। स्त्री। भक्षणे। रा.नि.व.२०।

**स्वधाप्रियः**। पुं। कृष्णतिले। श.र.।

**स्वधालता**। स्त्री। लताभेदे। चि.क्र.क.मद.चि.।

**स्वनिताह्वयः**। पुं। तण्डुलीयशाकक्षुपे। रा.नि.व.५।

**स्वनोत्साहः**। पुं। खड्गिनि। গাণ্ডার। श.र.।

**स्वपनम्**। क्ली। निद्रायाम्। श.र.।

**स्वपिण्डा**। स्त्री। पिण्डखर्ज्जूरे। रा.नि.व.११।

**स्वप्नः**। पुं। निद्रायाम्। अम.। निद्रितस्य ज्ञाने। স্বপন। दर्शने। मे.।

**स्वप्नकृत्**। क्ली। सुनिषण्णकशाके। শুশুনিশাক।

**स्वप्नक्**। त्रि। निद्रालौ। अम.।

**स्वप्नदर्शनम्**। क्ली। निद्रावस्थायां दर्शने। স্বপন দেখা। तल्लक्षणं यथा—"पूर्व्वदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः। रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान्। करणानान्तु वैकल्ये तमसाभिप्रवर्द्धिते। अस्वपन्नपि भूतात्मा प्रसुप्त इव चोच्यते।" सु.शा. ४अ.।

**स्वप्नदोषः**। पुं। स्वप्ने रेतःपतने। शब्दकल्प.।

**स्वप्ननाशः**। पुं। निद्राविरहे। मा.ज्व.नि.।

**स्वप्ननित्यः**। त्रि। नित्यं निद्रागमनशीले। स्वप्नदर्शनशीले। च.शा.८अ.।

**स्वभद्रा**। स्त्री। गाम्भारीवृक्षे। গাম্ভার গাছ।

**स्वभावः**। पुं। शक्तौ। प्रकृतौ। वै.निघ.।

**स्वभावबलप्रवृत्तः**। त्रि। क्षुत्-पिपासा-जरा-मृत्यु-प्रभृतिषु आधिदैविकरोगेषु। ते अपि द्विधा कालकृता अकालकृता च। तत्र परिरक्षणकृताः कालकृताः, अपरिरक्षणकृता अकालकृताश्च। सु.सू.२४अ.।

**स्वमणिः**। पुं। सूर्य्यकान्तमणौ।

**स्वयङ्गुप्ता**। स्त्री। कपिकच्छ्वाम्। আলকুশী। रा.नि.व.३। सु.चि.३०अ.। च.द.काम.चि.अगस्त्य-हरीतक्याम्।

**स्वयम्प्रभः**। पुं। तन्नाम-सोमलताभेदे। सु.चि. २९अ.।

**स्वयम्भुवः**। पुं। वनमुद्गे। মুগানী। वै.निघ.। स्त्री (वा)। धूम्रपत्रायां। তামাক। रा.नि.व.५। लिङ्गिन्याम्। শিবলিঙ্গিনী লতা। माषपर्ण्याम्। মাষাণী। रा.नि.व.३।

**स्वयम्भूः**। पुं। माषपर्ण्याम्। মাষাণী। लिङ्गिन्याम्। শিবলিঙ্গী লতা। रा.नि.व.३।

**स्वरः**। पुं। कण्ठशब्दे। अम.। सुवर्णे। वै.निघ.। नासावायौ। मे.।

**स्वरघ्नः**। पुं। स्वरनाशक-गलरोगभेदे। কণ্ঠ-রোগ বিশেষ। तस्य लक्षणं यथा—"योऽतिप्रताम्यन् श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः। कफोपदिग्धेष्वनिलायनेषु ज्ञेयः स रोगः श्वसनात् स्वरघ्नः॥" सु.नि. १६अ.।

**स्वरभङ्गः (भेदः)**। पुं। स्वरनाशकरोग-विशेषे। निदानादि यथा—"अत्युच्चभाषणविषाध्ययनाभिघातसन्दूषणैः प्रकुपिताः पवनादयस्तु। स्रोतःसु ते स्वरवहेषु गताः प्रतिष्ठां हन्युः स्वरं भवति चापि हि षड्विधः सः। वातेन कृष्णनयना-

गतनूतववर्ण भिन्नस्वरं वदति गर्द्दभवत् खरञ्च। पित्तेन पीतनयनाननमूत्रवर्णो ब्रूयाद्गलेन स च दाहसमन्वितेन। ब्रूयात्कफेन सततं कफरुद्धकण्ठः स्वल्पं शनैर्वदति चापि दिवा विशेषात्। सर्व्वात्मके भवति सर्व्वविकारसम्पत् तच्चाप्यसाध्यमृषयः स्वर-भेदमाहुः। धूम्ये(म्यै)त वाक् क्षयकृते क्षयमाप्नुयाच्च वागेष चापि हतवाक् परिवर्ज्जनीयः। अन्तर्गतस्वर-मलक्ष्यपदं चिरेण मेदोन्वयाद्वदति दिग्धगल-स्तृषार्त्तः॥" मा.नि.। "वाते सलवणं तैलं पित्ते सर्पिः समाक्षिकं। कफे सक्षारकटुकं क्षौद्रं केवल-मिष्यते॥" सं.

**स्वरभङ्गी (ङ्गिन्)।** पुं। पक्षिविशेषे। श.र.।

**स्वरसः।** पुं। आर्द्रद्रव्यपेषणजरसे। "यन्त्रप्रपी-डनाद्द्रव्यं रसः स्वरस उच्यते।" च.। एतदलाभे शुष्कद्रव्यम् अष्टगुणतोये पक्का पादावशेषो ग्राह्यः। प.प.१ख.। तस्य मात्रादिपरिमाणम्। "आहतात्तत्-क्षणाकृष्टाद्द्रव्यात् क्षुण्णात् समुद्भवः। वस्त्रनिष्पीडितो यः स्यात् रसः स्वरस उच्यते॥" शार्ङ्ग.म.१अ.। तदभावे—"कुडवं चूर्णितं द्रव्यं प्रक्षिप्तं द्विगुणे जले। अहोरात्रं स्थितं तस्माद्भवेत् स्वरस उच्यते॥ मात्रा स्वरसस्य गुरुत्वेन शुक्तिमात्रं प्रदापयेत्। अग्निसिद्धं रसञ्चैव पलमात्रं प्रदापयेत्॥ मधु-श्वेता-गुड़-क्षार-जीरकं लवणं तथा। घृतं तैलं च चूर्णञ्च कोलमात्रं रसे न्यसेत्॥" क्षणामेयः।

**स्वरसा।** स्त्री। कपिलपवायाम्। वै.निघ.।

**स्वरसादः।** पुं। स्वरभङ्गे। रा.नि.व.२०।

**स्वरसादिः।** त्रि। कषाये। वै.निघ.।

**स्वरहा(न्)**
**स्वरघ्नः** } पुं। स्वरभङ्गे। रा.नि.व.२०।

**स्वरामकः।** पुं। अक्षोटवृक्षे। আক্রোট গাছ। वै.निघ.।

**स्वरालुः।** पुं। वचायाम्। श.च.।

**स्वरुः।** पुं। इषिकभेदे। शब्दकल्पः।

**स्वर्गपुष्पम्।** क्लो। लवङ्गे। वै.निघ.।

**स्वर्गलोकेशः।** पुं। शरीरे। जटा.।

**स्वर्ज्जः (क्षारः)।** पुं। सर्ज्जिक्षारे। च.द. परिणामशूले। "हिङ्गु कुष्ठवचास्वर्ज्जः।"

**स्वर्ज्जिः (कः)।** पुं। स्वर्ज्जिक्षारे। সাজিমাটী। रा.नि.व.६। यवक्षारे। সোরা। भा.।

**स्वर्ज्जिकापाक्यः।** पुं। स्वर्ज्जिक्षारे। वै.निघ.।

**स्वर्ज्जि(का)क्षारः।** पुं। (Coroxylon griffithii.) Panjab salt wort or Sajji. स्वनामकक्षारे। সাচিক্ষার, সাজিমাটী। हिं साजीखार, बाङ्गणखार। तत्पर्य्यायाः,—कपोतः सुखवर्च्चकः सौवर्च्चलं रुचकं स्वर्जिका क्षारः सर्ज्जिकाः सुवर्च्चिकः सुग्नो योगवाही स्वर्ज्जिः स्वर्ज्जका स्वर्ज्जिका सुरवर्च्चकः स्वुज्जिका सर्ज्जिः स्वर्ज्जिकः स्वर्ज्जी सुखोर्ज्जिकः सुवर्च्चिः सुवर्च्चिकः सर्ज्जिक्षारः सर्ज्जिकाक्षारः। गुणाः—कटूष्णः तीक्ष्णः वातकफघ्नः गुल्माध्मानकृमिघ्नः व्रणोदरघ्नश्च। रा.नि.व.६। "यवक्षारो जयेदर्शः श्वासान् वात-कफामयान्। गुल्म-हृद्ग्रहणीपाण्डु-प्लीहानाहगलामयान्। तस्मादल्पान्तरगुणः स्वर्ज्जि-काक्षार उच्यते॥" राज.।

**स्वर्ज्जी (न्)।** पुं। स्वर्ज्जिक्षारे। সাচিক্ষার। रा.नि.व.६।

**स्वर्णम्।** क्लो। स्वनामप्रसिद्धधातौ। সোণা। तत्पर्य्यायाः,—सुवर्णं कनकं हिरण्यं हेम हाटकं तपनीयं शातकुम्भं गाङ्गेयं भर्म्मं भर्म्मं चामीकरं जातरूपं महारजतं काञ्चनं रुक्मं रुग्मं कार्त्तस्वरं जाम्बूनदं अष्टापदं करहाटकं स्तकुथं मानसि चक्रुण्यं लोहोत्तमं भूत्तमः पुरटं रैकनः शात-कौम्भं कर्ब्बूरं कर्च्चूरं भद्रं भूरि पिञ्जरं द्राविणं गैरिकं चाम्पेयं मरुः चन्द्रः कलधौतं अभ्रकं अग्नि-वीजं लोहवरं ऊर्द्ध्वसारकं स्पर्शमणिप्रभवं मुख्यधातु शतखण्डं उज्ज्वलं कल्याणं मनोहरं अग्निः अग्नि-वीर्य्यं दीप्तं आग्नेयं भास्करं पिञ्जानं अपिञ्जरं तेजः अग्निभं दीप्तं दीप्तकं मङ्गल्यं सौमञ्जकं भृङ्गारं जाम्बवं निष्कं अण्डं अयः पेशः क्षमनं लोहं हेमं चन्द्र अमृतं महत्। "पुरा निजाश्रमस्थानां सप्त-र्षीणां जितात्मनाम्। मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः। वसिष्ठश्चेति सप्तैते कीर्त्तिताः परमर्षयः॥ पत्नीर्विलोक्य लावण्यलक्ष्मीसम्पन्न-यौवनाः। कन्दर्पदर्पविध्वस्तचेतसो जातवेदसः। पतितं यद्धरापृष्ठे रेतस्तद्धेमतामगात्॥ कृत्रिम-ञ्चापि भवति तद्रसेन्द्रस्य वेधतः॥" इति स्वर्णो-त्पत्तिः। "दाहे रक्तं सितं छेदे निकषे कुङ्कुम-प्रभम्। तारशुल्वोज्झितं स्निग्धं कोमलं गुरु हेम सत्॥" इति परीक्षा। "स्वर्णताराररतासाय-स्पत्राण्यग्नौ प्रतापयेत् निषिञ्चेत्तप्ततप्तानि तैले

तक्रे गवां जले। काञ्जिके च कुलत्थानां कषाये सप्तधा पृथक्। एवं स्वर्णादिलौहानां विशुद्धिः संप्रजायते।" पत्तलीकृतपत्राणि अग्नौ तापयित्वा तप्तानि तैले तक्रे काञ्जिके गोमूत्रे कुलत्थकषाये विम्बि निर्वाप्य शोधयेत्। एवमेवान्येषां धातूनामपि शोधनं कार्य्यम्॥ इति शोधनम्। मारणं यथा—स्वर्णस्य एकं भागं पारदस्य च भागद्वयम् अम्लेन मर्दयित्वा गोलकसम गन्धकचूर्णं तदधः उपरि च निधाय शरावसंपुटे निरुध्य त्रिंशद्वनकरीषैः चतुर्दश पुटान् दद्यात्। "शिला गन्धार्कदुग्धाक्ता स्वर्णाद्याः सप्त धातवः। म्रियन्ते द्वादशपुटैः सत्यं गुरुवचो यथा॥" शिला मनःशिला। एवं चूर्णादिभिः पत्राणि लेपयित्वा गजपुटैः पचेत्। अथवा रसकज्जलिकया केवलेन वा रसेन स्वर्णपत्रं लिप्त्वा हिङ्गुलसिन्दूरमनःशिलाभिः स्वर्णसमाभिर्मेलयित्वा धुस्तूररसेन घनं मर्दयित्वा गोलकं कुर्य्यात्। ततो हण्डिकामध्ये संस्थाप्य शरावेणाच्छाद्य वहिर्लेपं दत्त्वा पलाशभस्मना पूरयेत्। ततो दिनद्वयं गाढ़ाग्निं दद्यादिति। र.मा.स.। गुणाः—"सुवर्णं शीतलं हृद्यं वल्यं गुरु रसायनम्। स्वादु तिक्तञ्च तुवरं पाके च स्वादु पिच्छलम्। पवित्रं वृंहणं नेत्र्यं मेधास्मृतिमतिप्रदम्। हृद्यमायुष्करं कान्तिवाग्विशुद्धिस्थिरत्वकृत्। विषद्वयक्षयोन्मादत्रिदोषज्वरशोषजित्। वलं सवीर्य्यं हरते नराणां रोगव्रजान् शोषयतीह काये। असौख्यकारञ्च सदा सुवर्णमशुद्धमेतन्मरणञ्च कुर्य्यात्। असम्यक् मारितं स्वर्णं वलं वीर्य्यञ्च नाशयेत्। करोति रोगान् मृत्युञ्च तद्धन्यादयवतक्षतः। भा.पू.धा.व.। धुस्तूरे। अम.। वै.निघ.१म. चयपि. कालान्तकरसे। नागकेशर पुष्पे। नागेश्वर फूल। गौरसुवर्णशाके। सोणानटीया शाक। रा.नि.व.७।१०।

**स्वर्णकम्।** क्ली। धुस्तूरफले। मेप.शिरोरो.चिकित्सितैले।

**स्वर्णकणः।** पुं। कणगुग्गुलौ। रा.नि.व.१२।

**स्वर्णकण्डूः।** स्त्री। सर्ज्जरसे। धूनो, रजन। वै.निघ.।

**स्वर्णकदली।** स्त्री। स्वर्णवर्ण-कदलीफले। चाँपाकला।

**स्वर्णकमलम्।** क्ली। रक्तपद्मे। वै.निघ.।

**स्वर्णकेतकी।** स्त्री। रक्तकेतकीवृक्षे। सोणाकेया। तत्पर्य्यायाः,—हेमकेतकी कनकप्रसवा हेमी छिन्नदला विटदला स्वर्णपुष्पी कामखड्गदला। पुष्पगुणाः—वर्णकरं केशसौगन्ध्यकरं स्वर्णवर्णं मदनोन्मत्ततावाहुल्यकरं सौख्यकारि च। केतकीस्तनः, अतिशीतलः कटुः पित्त-कफघ्नः रसायनः वल्यः देहदार्ढ्यकरश्च। रा.नि.व.१०।

**स्वर्णगैरिकम्।** क्ली। रक्त-गैरिके। रक्त-गिरिमाटि। वै.निघ.।

**स्वर्णचातकः।** पुं। चातकविशेषे।

**स्वर्णचूड़ः।** पुं। पक्षिविशेषे। चाष पक्षी। जटा.।

**स्वर्णजम्।** क्ली। स्वर्णमाक्षिके। वै.निघ.। वङ्गे। हे.च.।

**स्वर्णजातिका (ती)।** स्त्री। (Jasminum revolutum.) पीतजातीपुष्पवृक्षे। पीत चामेली। वै.निघ.। See जाती।

**स्वर्णजीवन्तिका (न्ती)।** स्त्री। पीतपुष्पजीवन्त्याम्। स्वर्णजीवन्ती। हिं सोनाजीवक। तत्पर्य्यायाः,—हिमाश्रया हेमजीवन्ती हेमपुष्पी हेमवल्ली हेमलता हेमाङ्गा तृणग्रन्थिः स्वर्णपर्णा सुजीवन्ती सुपर्णिका स्वर्णलता। गुणा.—हृद्या मधुरा चक्षुष्या शिशिरा वातपित्तरक्तदाहघ्नी च। रा.नि.व.३।

**स्वर्णजीवा।** स्त्री। स्वर्णजीवन्त्याम्। वै.निघ.।

**स्वर्णदी।** स्त्री। स्वर्गगङ्गायाम्। अम.। वृश्चिकाल्याम्। विछाती। रा.नि.व.५।

**स्वर्णदुग्धा।** स्त्री। स्वर्णक्षीरिकायाम्। सोणाशिऊई, शेयालकाँटा। वै.निघ.।

**स्वर्णद्रुः।** पुं। महारग्वधवृक्षे। वड़ सोन्दाल। रा.नि.व.९।

**स्वर्णधातुः।** पुं। स्वर्णगैरिके। स्वर्णे। वै.निघ.।

**स्वर्णनिभम्।** क्ली। स्वर्णगैरिके। स्वर्ण-गिरिमाटि। वै.निघ.।

**स्वर्णपत्रम्।** क्ली। पत्तलसुवर्णपत्रे। सोणार पात। रस.चि.।

**स्वर्णपत्रिका।** स्त्री। सुवर्णमुख्याम्। सोणामुखी। तत्पर्य्यायाः,—कल्याणी हेमपत्री रेचनी स्वर्णपत्रिका। गुणाः—"विट्संग वह्निमान्द्यञ्च

सर्व्वं सिकतायन्त्रे पचेद् यामचतुष्टयम् ॥ तो पाक्रात् सद्यावर्त्ते चित्रं कीर्णं हेमकर्णैरिव् ॥ रसणीयतरं स्वर्णवङ्गं नाम रसायनम् । वन्यम् मेहहरं कान्ति मेधा-वीर्य्याग्निवर्द्धनम् ॥" भै. ।

**स्वर्णवर्णः** । पुं । कणगुग्गुलौ । रा.नि.व.१२ । वंशपत्रहरिताले । स्वर्णगैरिके । वै.निघ. । स्त्री । हरिद्रायाम् । दारुहरिद्रायाम् । रा.नि.व.६ ।

**स्वर्णवल्कलः** । पुं । श्योणाकवृक्षे । श.च. ।

**स्वर्णवल्ली** । स्त्री । स्वर्णलतायाम् । लताविशेषे । तं घेकुड्तोगे । तत्पर्य्यायाः,—हरिणी पीतिका काकायुः काकवल्लरी रक्तफला । गुणाः —शिरःपीड़ां हन्ति विदोष विनिवारयति दुग्धदा च भवति । भा. । रा.नि.व.३ । स्वर्णलोहके । शोनाल गाछ । वै.निघ. । स्वर्णजीवन्त्याम् । रा.नि.व.३ ।

**स्वर्णशेफालिका** । स्त्री । पीतशेफालिकायां । चि.क्र.क.स्त्रीरो.चि. । आरग्वधवृक्षे । सोनाल-गाछ । श.मा. ।

**स्वर्णसिन्दूरम्** । क्ली । रससिन्दूरविशेषे । पाकः —शुद्धरसः ८ तो. शुद्धगन्धकः ८ तो. स्वर्णं २ तो. वटाङ्कुररसेन प्रहरं कुमारीरसेन च प्रहरं मर्द्दयित्वा काचकूप्यां निधाय वालुकायन्त्रेण पचेत् । शीते कूपीगलसंलग्नपीतरजांसि गृह्णीयात् । भैष. । रस चि. ।

**स्वर्णालिः** । पुं । चतुरङ्गुलौ । शोनाल । च.सू.३अ. ।

**स्वर्णक्षीरिणी (री)** । स्त्री । (Agremone mexicana.) स्वनामख्यातवृक्षे । सोणाखिरुई, शियालकाँटा । हिं सत्यनाशी । मं पिवलाधोत्रा । ता. ब्रह्म दन्डु चिरट । तत्पर्य्यायाः,—पट्टपर्णी हिमशिखा हिमावती हैमवती स्वर्णदुग्धा स्वर्णाह्वा रुक्मिणी सुवर्णा सुवर्णक्षीरी हेमदुग्धा हेमक्षीरी काञ्चनी । "हेमवर्णं पयस्तस्याः हिमवद्-भूमिसम्भवा । सा नागजिह्विकाकारा तन्मूलं वदिशौषधम् ॥" च. सु.४अ. । तन्मूलं चोक् इति हिन्दी । गुणाः— "......रेचनी तिक्ता भेदिन्युत्क्लेशकारिणी । कृमिकण्डु विषानाह-कफपित्तास्रकुष्ठनुत् ॥" भा. कुष्ठ.चि. ।

**स्वर्णाङ्गः** । पुं । महारग्वधवृक्षे । बड़ सोनाल । रा.नि.व.९ ।

**स्वर्णाभम्** । क्ली । हरिताले । वै.निघ. ।

**स्वर्णाभा** । स्त्री । पीतपुष्पयूथिकायाम् । हलदे यूँइफुल । वै.निघ. ।

**स्वर्णारिः** । पुं । शीसके । वै.निघ. । गन्धके । शब्दकल्प: ।

**स्वर्णाह्वा** । स्त्री । स्वर्णक्षीर्य्याम् । शियालकाँटा । वै.निघ. ।

**स्वर्णिका** । स्त्री । धन्याके । धनिया । वै.निघ. ।

**स्वर्भानवः** । पुं । गोमेदरत्ने । रा.नि.व.१३ ।

**स्वर्य्यकः** । पुं । तिन्दुकवृक्षे ।

**स्वर्वैद्यौ** । पुं । अश्विनीकुमारयोः । अम. ।

**स्वल्पः** । पुं । नखीनामगन्धद्रव्ये । नखी । वै. निघ. ।

**स्वल्पकन्दः** । पुं । कशेरौ । केशुर । वै.निघ. ।

**स्वल्पकाष्ठः** । पुं,क्ली । श्वेतालौ । शाँक् आलु । वै.निघ. ।

**स्वल्पकेशरः (री[इन्])** । पुं । कोविदारवृक्षे । रक्तकाञ्चन । रा.नि.व.१० ।

**स्वल्पकेशी** । स्त्री । भूतकेशे । दानदूर्वा । श.च. ।

**स्वल्पघण्टा** । स्त्री । चारशणवृक्षे । वन शण । वै.निघ. ।

**स्वल्पचटका** । पुं । क्षुद्रचटके । चड़ुइ पाखी । वै.निघ. ।

**स्वल्पजम्बूकः** । पुं । क्षुद्रशृगाले । खँकशियालः । वै.निघ. ।

**स्वल्पतरुः** । पुं । केसुककन्दे । केउ गाछ । वै.निघ. ।

**स्वल्पपत्रकः** । पुं । गौरशाके, मधूकविशेषे । मउलविशेष । "गौरशाको मधूलोऽन्यो गिरिजः स्वल्पपत्रकः । र.मा. ।

**स्वल्पफला** । स्त्री । हवुषाभेदे । हवुषवृक्ष-विशेष । तत्पर्य्यायाः,—कच्छुघ्नी ध्वाङ्क्षनाशिनी श्रोहगनुः विषघ्नी कफघ्नी अपराजिता । हवुषा-सदृशगुणः । रा.नि.व.४ ।

मदीपि चेन्दुरश्मय:। शारदानि च माल्यानि वासांसि विमलानि च। तुषारचारसोदिव्यदधितक्रसातपान्। तीक्ष्णमद्य-दिवास्वप्न-पुरोवातान् परित्यजेत्। शीते वर्षासु चाद्यांस्त्रीन् वसन्तेऽन्त्यान् रसान् भजेत्। स्वादुं निदाघे शरदि स्वादुतिक्तकषायकान्। शरद्वसन्तयो रूक्षं शीतं घर्म्मघनान्तयो:। अन्नपान समासेन विपरीतमतोऽन्यथा। नित्यं सर्व्वरसाभ्यासः स्वाध्याधिक्यमृतावृतौ॥" च.द.साम्याधिकारे।

**स्वस्वारिष्टः**। पुं। अश्वस्य मृत्युचिह्ने। ঘোড়ার মৃত্যুলক্ষণ। ज.द.२३अ.।

**स्वादः (नम्)**। पुं, क्ली। आस्वादे। আস্বাদ। रसग्रहणे। व्याक.।

**स्वादुः**। पुं। मधुररसे। মিষ্টরস। गुणाः—"रसायनोत्तमो बल्यो रोगघ्नश्च उत्तमः। स्निग्धश्च तर्पणो वापि हृंहणश्च सजीवन:॥" अत्रि. १०अ.। गुड़े। त्रिका.। जीवकौषधौ। জীবক। जटा.। मधूकवृक्षे। है.च.। पियालवृक्षे। दाड़िम्बवृक्षे। मातुलुङ्गभेदे। কমলা নেবু। काश्मर्य्यां। बदरे। वै.निघ.। अगुरुसारे। অগুরু বৃক্ষ। तत्पर्य्याया:,—अगुरु सार: सुधूम्य: गन्ध-धूमक:। गुणाः—कटुः कषायोष्णः सद्‌गन्धामोदवातघ्नश्च। रा.नि.व.१२। स्त्री। द्राक्षायाम्। কিস্‌মিস্। अ.टी.भ.। क्ली। सैन्धवलवणे। दुग्धे। वै.निघ.। त्रि। मधुरे। मे.।

**स्वादुकण्टकः**। पुं। विकङ्कतवृक्षे। বঁইচী গাছ। भा.। ह्रस्वगोक्षुरके। ছোট গোখ্‌রী। भा.म.४भ.शाल्यादितैले। विकण्टकवृक्षे। বঁইচী-জাতীয় গুল্মবিশেষ। रा.नि.व.११।

**स्वादुकन्दः**। पुं। भूमिकुष्माण्डे। श्वेतपिण्डाल्वौ। (कः) केमुककन्दे। কেঁউ গাছ। वै.निघ.। स्त्री। भूमिकुष्माण्डे। रा.नि व.७।

**स्वादुका**। स्त्री। नागदन्त्याम्। হাতিশুঁড়ে। रा.नि.व.५।

**स्वादुकोषातकी**। स्त्री। मधुरकोषातक्याम्। ঝিঙা। वै. निघ.।

**स्वादुखण्डः**। पुं। गुड़े। खण्डे। श.र.।

**स्वादुगन्धच्छदा**। स्त्री। कृष्णतुलस्याम्। কাল তুলসী। वै.निघ.।

**स्वादुगन्धा**। स्त्री। रक्तशोभाञ्जनवृक्षे। লাল সজিনা। र.मा.। भूमिकुष्माण्डे। ভূঁইকুমড়া। जटा.।

**स्वादुगन्धिः**। पुं। रक्तशिग्रौ। লাল সজিনা। वै.निघ.।

**स्वादुतिक्तम्**। क्ली। पीलुफले। আক্‌রোট। वै.निघ.।

**स्वादुतिक्तफलः**। पुं। ऐरावतीवृक्षे। নেবু-গাছ। वै.निघ.।

**स्वादुपटोलिका (ली)**। स्त्री। मधुरपटोललतायाम्। মিঠা পল্‌তা। वै निघ.।

**स्वादुपत्रः**। पुं। स्वादुपटोलिकायाम्। वै. निघ.।

**स्वादुपर्णी**। स्त्री। दुग्धिकायाम्। থিরুই। रा.नि.व.५।

**स्वादुपाकफला** } **स्वादुपाका** } स्त्री। काकमाचिकायाम्। কেউশাঠুঁটী, গুড়কাঁউনী। वै निघ. रा.नि.व.४।

**स्वादुपारे(ले)वतः**। पुं। दीर्घानुरखर्ज्जूरीवृक्षे। वै.निघ.।

**स्वादुपिण्डा**। स्त्री। पिण्डीखर्ज्जूरवृक्षे। वै. निघ.।

**स्वादुपुष्पः (ष्पी)**। पुं, स्त्री। कृष्णकटभीवृक्षे। रा.नि.व.९।

**स्वादुपु(ष्पि)का**। स्त्री। दुग्धिकायाम्। দুধিয়া, থিরুই। वै.निघ.।

**स्वादुफलम्**। क्ली। बदरीफले। श.र.। पुं। धन्वनवृक्षे। ধাবনা গাছ। रा.नि.व.९। स्त्री। (ला)। कोशातक्याम्। ঘোষা। रा.नि.व.७। कोलिवृक्षे। কুলগাছ। त्रिका.। खर्ज्जूरीवृक्षे। कदल्यां। कपिलद्राक्षायाम्। भा.।

**स्वादुबीजः**। पुं। अश्वत्थवृक्षे। वै.निघ.।

**स्वादुमज्जा (न्)**। पुं। पर्व्वतपीलौ। আক্‌রোট। जटा.।

**स्वादुमस्तका**। स्त्री। खर्ज्जूरीवृक्षे। ক্ষুদ্র-খেজুর গাছ। भा.।

**स्वादुमांसी**। स्त्री। काकोल्याम्। কাঁকলা। रा.नि व.३।

**स्वादुमाषा।** स्त्री। माषपर्ण्याम्। माषाणी। वै.निघ.।

**स्वादुमूलम्।** क्ली। गर्ज्जरमूले। गाजरमूल। रा.नि.व.७।

**स्वादुरसा।** स्त्री। काकोल्याम्। अम.। मूर्व्वायाम्। वै.निघ.। आम्रातकफले। र.र.। शतावर्य्याम्। रा.नि.व.४। द्राक्षायाम्। मदिरायाम्। हे.च.।

**स्वादुलः।** पुं। चीरमूर्व्वायाम्। वै.निघ.।

**स्वादुलता।** स्त्री। विदार्य्याम्। भूँइकुमड़ा। रा.नि व.७।

**स्वादुलुङ्गी।** स्त्री। मधुकर्कटिकायाम्। शरबती नेबू, शाक्तारा नेबू। मद.व.६। स्वादु मातुलुङ्गे। वै.निघ।

**स्वादुवीर्य्यः।** पुं। पियालवृक्षे। वै.निघ.।

**स्वादुशुण्ठी।** स्त्री। श्वेतकिणिह्याम्। वै.निघ.।

**स्वादुशुद्ध(स्वच्छ)म्।** क्ली। पार्व्वतलवणे। सैन्धव। शब्दकल्प:।

**स्वादुसिञ्चितिका(फलम्।** क्ली। कावेलदेशीयफले। मेवफल। वै.निघ.।

**स्वाद्वगुरुः।** पुं। मधुररसागुरुवृक्षभेदे। गुणाः—उष्ण आमवातहरः.तुवरश्च। राज.।

**स्वाद्वन्नम्।** क्ली। स्वादुरसान्ने। गुणाः—"सौमनस्यं बलं पुष्टिमुत्साहं हर्षमायुषः। स्वादु अन्नमथान्यम्......॥" भा.।

**स्वाद्वम्लः।** पुं। दाड़िमवृक्षे। त्रिका.। नागरङ्गवृक्षे। नारेङ्गा नेबुर गाछ। राज.। कदम्बवृक्षे। वै.निघ.।

**स्वाद्वी।** स्त्री। द्राक्षायाम्, कपिलद्राक्षायाम्। द्राक्षा, कान द्राक्षा। अम.। चिर्भटिकायाम्। फूटी। वै.निघ.। क्षुद्रखर्ज्जूरिवृक्षे। भा.। गुड़त्वचि। दारुचिनि।

**स्वाध्यायः।** पुं। वेदाभ्यासे। वै.निघ.।

**स्वान्तम्।** क्ली। मनसि। रा.नि.व.१८।

**स्वापः।** पुं। स्पर्शाज्ञाने। असाड़। सु.नि.५ अ.। निद्रायाम्। अम.।

**स्वापतेयम्।** क्ली। द्रव्ये। वै.निघ.।

**स्वापान्ययम्।** क्ली। शयनशय्यायां। शोबार बिछाना। च.सू.१५अ.।

**स्वामी (इन्)।** पुं। पारदे। वै.निघ.।

**स्वाम्युपकारकः।** पुं। अश्वे। शब्दकल्पः।

**स्वायम्भुवगुग्गुलुः।** पुं। वातरक्ताधिकारोक्तपक्वगुग्गुलौ। पाठः—"अलम्बुषा लौहचूर्णं तयोर्द्वेपले पृथक्। पलत्रयञ्च ताप्यस्य वाकुच्याश्च पलत्रयम्। शिलाजतु तयोस्तुल्यं पलानि दश गुग्गुलोः। सर्व्वाण्येतानि सुचूर्णं गुड़िकां कारयेद्भिषक्। शाणं कर्षार्द्धकर्षं वा ततः खादेत् प्रयत्नतः। कालपादेन विख्यातो नाम्ना स्वायम्भुवो रसः॥" रस.र.।

**स्वायम्भुवी।** स्त्री। ब्राह्मीशाके। वै.निघ.।

**स्वारामगुच्छकम्।** क्ली। ग्रन्थिपर्णे।

**स्वास्थ्यम्।** क्ली। यथाप्रकृतित्वे। आरोग्ये। श.र.। या.चि.१अ.।

**स्वाहः।** पुं। शल्लकीनिर्यासे। वै निघ.।

**स्विन्नः।** त्रि। कृतस्वेदे। घर्म्मयुक्ते। हला.। पक्वे। व्याक.।

**स्वेदः।** पुं। घर्म्मे। घाम। रा.नि.व.१८। "स्वेदावरोधः सन्तापः॥" मा.नि.। धूपे। भापरा। मे.। स व्याधिविशेषेषु महामध्यमृदुर्भवति। स तापेनोष्मणा द्रवेणोपनाहेनेति चतुर्विधोपायेन साध्यते। पुनश्च रोगभेदेषु त्रयोदश। यथा—सङ्करस्वेदः प्रस्तरस्वेदो नाड़ीस्वेदः परिषेकस्वेदोऽवगाहनस्वेदो जेन्ताकस्वेदः अश्मघनस्वेदः कर्षूस्वेदः। कुटीस्वेदो भूस्वेदः कुम्भीस्वेदः कूपस्वेदः होलाकास्वेदश्च। च.सू.१४अ.। ते सर्व्व एव वातहारिणः। "स्वेदो तापोष्मजो प्रायः श्लेष्मघ्नो समुदीरितो। उपनाहस्तु वातघ्नः पित्तसङ्गे द्रवोहितः। महाबले महाव्याधौ शीते स्वेदो महान् स्मृतः। दुर्व्वले दुर्व्वलः स्वेदो मध्यमे मध्यमो मतः। वलासे रूक्षणः स्वेदो रूक्ष-स्निग्धः कफानिले। कफमेदोहृते वाते कौष्णं गेहं रवेः करान्। नियुद्धं मार्गगमनं गुरु प्रावरणं भुवम्। चिन्ताव्यायामाभारांश्च सेवेतामयमुक्तये॥" भा.। व्रणोपक्रमविशेषे, यो रुजावद्दारुणकठिनेषु कार्य्यः। सु.चि.१अ।

**स्वेदकः।** पुं। अयस्कान्तभेदे। कान्तलौह। अयं रसायने श्रेष्ठः। रा नि.व.१३।

**स्वेदचूषकः।** पुं। शीतलवायौ। शब्दकल्पः।

**स्वेदजः** । त्रि । कृमिकीट-पिपीलिकादौ । अम. । काल्लोहे । वै.निघ. ।

**स्वेदजलम्** । क्ली । घर्मे । धात्वजनितजले ।

**स्वेदजशाकम्** । क्ली । शाकभेदे । तच भूमी मयकाष्ठच्छायुद्भवं शिलीन्ध्रादिकम् । छाता इति लोके । [पोयानछातू] । गुणाः—शीता दोषला पिच्छिला गुरव.छर्द्दतीसारज्वरश्लेष्मरोगहराश्च । "श्वेतशुभ्रभूतलोकाष्ठवंशगोब्रजसम्भवाः । नातिदोषकरास्ते स्युः शेषास्तेभ्यो विगर्हिताः ॥" भा.पू.१ भ.शा.व. । "छत्त्रकास्तु पलालेषु करीष-चितिरेणुजाः । सर्व्वाः संस्वेदजाः शीताः कषायाः स्वादु-शीतलाः । गुरव. च्छर्द्यतीसारज्वरश्लेष्मामयापहाः । श्वेताः शुचिस्थलीकाष्ठवंशगोव्रजसम्भवाः । नातिदोषकरा ज्ञेयाः शेषास्तेभ्यो विगर्हिताः ॥" राज. ।

**स्वेदनम्** । क्ली । स्वेदे । मे. । स्वेदनयन्त्रेण रससंस्कारविशेषे । भा. ।

**स्वेदनयन्त्रम्** । क्ली । पारदस्वेदनयन्त्रे । दोलायन्त्र । तल्लक्षणम्—"साम्बुस्थालीमुखे वद्ध्वं वस्त्रे स्वेद्यं निधाय च । पिधाय पच्यते यत्र न्त्रं स्वेदनं स्मृतम् ॥" भा. ।

**स्वेदनाशः** । पुं । वायौ । वै.निघ. ।

**स्वेदनी** । स्त्री । सुराग्निसन्धानार्थ-पात्रविशेषे । भाटी । वै निघ. । लौहपात्रविशेषे । ताउया । भ. ।

**स्वेदमाता (ढ)** । स्त्री । शरीरस्थ-रसधातौ । रा.नि.व.२८ ।

**स्वेदवाहिस्रोतः** । क्ली । घर्मवाहिनाड्याम् । तस्य मूलं मेदः रोमकूपाश्च । च.वि.५अ. ।

**स्वेदस्रावः** । पुं । पित्तज्वरोगे । धाम हओया । निदा. ।

**स्वेदाप्रवर्त्तनम्** । क्ली । घर्मातिशये । घर्मनिग्रहे । मा.नि. ।

**स्वेदावरोधः** । पुं । घर्मावरोधे । जठराग्नेरवरोधे । "स्वेदावरोधः सन्तापः......" मा.नि. ।

**स्वैरणी** । स्त्री । वल्गुलापक्षिणि ।

**स्वैरिता** । स्त्री । स्वच्छन्दतायाम् । अम. ।

**स्वोरसः** । पुं । स्वरसे । शिलापिष्टकल्के । श.च ।

---

## ह ।

**हः** । पुं । जले । रक्ते । एकाक्ष. को. ।

**हंसः** । पुं । श्वेतजातीयजलचरपक्षिणि । हाँस । मं वल्लकि । तत्पर्य्यायाः,—श्वेतगरुत् चक्राङ्गः मानसौकः कलकण्ठः शितिच्छदः शितिपक्षः श्वेतच्छदः श्वेतपक्षः सितच्छदः सितपक्षः वक्राङ्गः सरःकाकः पुरुदंशकः जालपात् जालपादकः धवलपक्षः मानसालयः । गुणाः—"हंस श्लेष्मकरो बलातिरुचिदो हृद्यो गुरुः शीतलः......" अत्रि. २२अ. । अस्य मांसगुणाः—हृद्यतमं तिमिरघ्नञ्च । रा.नि. व.१७ । गुरु उष्णं मधुरं स्निग्धं स्वरवर्णकरं बृंहणं शुक्रलं वातघ्नञ्च । सु.सू.४६अ. । हंसडिम्बगुणाः—"रेतःक्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च । मधुराम्लविपाकीनि सद्योबलकराणि च ॥" च. सू.२७अ. । अपिच—"हंसडिम्बं परं हृद्यं बृंहणं वातकोपनम् । पाके लघुतरं प्रोक्तं सर्व्वामय विनाशनम् ॥" राज. ३प. । घोटकभेदे । शारीरवायुभेदे । मे. । पारदे । वनस्पतिभेदे । रौप्ये । वै. निघ. । अन्तःकरणे । विष्णौ । सूर्य्ये । त्रिका. ।

**हंसकः** । पुं । राजहंसे । श.च. ।

**हंसकूटः** । पुं । ककुदि । झूँटि । शब्दरत्न. ।

**हंसदाहनम्** । क्ली । अगुरुणि । अगुरुकाष्ठे । श.च. ।

**हंसपदम्** । क्ली । कर्षे । २ तो. । प.प.१ख. ।

**हंसप(पा)दी** । स्त्री । हंसपदाकारपत्र लतायाम्, गोधापद्याम् । गोयालिया लता । मं हंसपादी । कं नविलड़ि । तत्पर्य्यायाः,—मधुस्रवा त्रिपदी अलसा कीटमाता त्रिपादिका । गुणा — "हंसपादी कटूष्णा स्याद्विषभूतविनाशिनी । भान्यपस्मारदोषघ्नी विज्ञेया च रसायनी ॥" रा.नि.व. ५ । "हंसपादी गुरुः शीता हन्ति रक्तविषव्रणान् । विसर्पदाहातीसारलूताभूताग्निरोहिणीः ॥" भा.पू. १भ.गु.व. । सु.सू.३८अ. । रक्त-लज्जालुकायाम् । वै.निघ. ।

**हंसपाकयन्त्रम्** । क्ली । औषधपाकार्थयन्त्रविशेषे । यथा—"खर्परं सिकतापूर्णं कृत्वा तस्यो-

पादं विपेत्। ततस्तं खर्परं तत्र शनैर्मृद्वग्निना पचेत्। हंसपाकं समाख्यातं यन्त्रम्... ..॥" र. चि.३ अ।

**हंसपाकाग्निः।** पुं। हंसपाकयन्त्रेण पाक-योग्याग्नौ। रस.चि.३ अ.।

**हंसपाद(क)म्।** क्ली। हिङ्गुले। जटा.। सिन्दूरे। वै.निघ.।

**हंसपादिका।** स्त्री। हंसपाद्याम्। रा.नि.व. ५। र.मा.। मण्डूकपर्ण्याम्। थुलकुड़ि, थान-कुनि। च.सू.४ अ.। र.सा.सं.। रक्तलज्जालुका-याम्। वै निघ.।

**हंसमाषा।** स्त्री। माषपर्ण्याम्। माषाणी। रा.नि.व.३।

**हंसयोषिता।** स्त्री। राजहंस्याम्। वै.निघ.।

**हंसलोमशम्।** क्ली। कासीसे। हिराकस। रा.नि.व १३।

**हंसलोहकम्।** क्ली। पित्तले। हे.च.।

**हंसवती।** स्त्री। हंसपद्याम्। जटा.।

**हंसबीजम्।** क्ली। हंसडिम्बे। रा.नि.व.१९। गुणा.—"हंसबीजं परं हृद्यं बृंहणं वातकोपनम्। पाके लघुतरं प्रोक्तं सर्व्वामय-विनाशनम्॥" राज. ३२.। अपिच—"रेत:क्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च। मधुराण्यविदाहीनि सद्यो बलकराणि च॥" च.सू.२७ अ.।

**हंसाङ्घ्रिः।** स्त्री। हिङ्गुले। रक्तलज्जालुकायाम्। वै.निघ.।

**हंसाण्डम्।** क्ली। हंसडिम्बे। हाँसेर डिम। गुणाः—अतिबल्यम् अतिवृष्यं वातघ्नं पाके लघुतरं सर्व्वरोगहरञ्च। रा.नि.व.१९। राज ३५।

**हंसाभिमुख्यम्।** क्ली। रौप्यधातौ। रा.नि. व.१३। हे.च.।

**हंसाह्वया।** स्त्री। हंसपाद्याम्। गोयालिया। सु.चि.१८ अ.। च.द.ग्रन्थि.चि.अमृताद्यतैलं।

**हंसिका (सी)।** स्त्री। हंसपद्याम्। श.र.। मुद्गपर्ण्याम्। वै.निघ.। वराटकभेदे। कड़ि। रा.नि.व.२३।

**हंसिरः।** पुं। मूषिकभेदे। तद्दृष्टे "हंसिरेणा प्रविद्धस्य जम्भालोमाचहर्षणं।" सु.कल्प.६ अ.।

**हंसोदकम्।** क्ली। अंशूदके। च.सू.२६ अ.। See अंशूदकम्।

**हञ्जिः।** स्त्री। क्षुधायाम्। जटा.।

**हञ्जिका।** स्त्री। भार्ग्याम्। वामनहाटी।

**हञ्जी।** स्त्री। हिक्कायाम्। वै.निघ.।

**हटलयम्।** क्ली। शैवाले। सु.सू.४५ अ.।

**हट(ठ)पर्णि (र्णी)।** क्ली, स्त्री। शैवाले। श.र.। त्रिका.।

**हट्टविलासिनी।** स्त्री। नखीनामगन्धद्रव्य-विशेषे। अम.। हरिद्रायां। भा.।

**हठः।** पुं। शैवाले, जलकुम्भिकायाम्। पाना। सु.चि.११ अ.।

**हठालुः।** स्त्री। कुम्भिकायां। पाना। श.च.।

**हठी।** स्त्री। वारिपर्ण्याम्। पाना। धरणिः।

**हड्डम्।** क्ली। अस्थनि। हाड़। श.र.।

**हड्डजम्।** क्ली। मज्जायाम्। श.च।

**हण्डिका (ण्डी)।** स्त्री। मृत्पात्रविशेषे। हाँड़ि। शब्दकल्प:।

**हण्डिकासुतः।** पुं। क्षुद्रहण्डिकायां। छोट हाँड़ि। त्रिका.।

**हतचूर्णकः।** पुं। सोमलतायाम्। कश्चित्।

**हताधिमन्थः।** पुं। सर्वाक्षिगत रोगभेदे। लक्षणं—"उपेक्षणादक्षि यदाधिमन्थो वातात्मकः सादयति प्रसह्य। रुजाभिरुग्राभिरसाध्य एष हता-धिमन्थः......॥" मा.नि.।

**हतुः।** पुं। व्याधौ। शस्त्रे। उणा।

**हदनम्।** क्ली। विष्ठात्यागे। हागा। व्याक.।

**हनीलः।** पुं। केतक्यां। र.मा.।

**हनुः (नूः)।** स्त्री। हट्टविलासिन्यां। हनुद्वयां। अ.टी.भ.। रोगे। अस्त्रे। मृत्यौ। जटा.। पुं। नखीनामगन्धद्रव्ये। रा.नि.व.१२।

**हनुग्रहः।** पुं। तन्नामवातव्याधौ। निदानादि यथा—"जिह्वानिर्लेखनाच्छुष्कभक्षणादभिघाततः। कुपितो हनुमूलस्थः स्रंसयित्वानिलो हनू। करोति विवृतास्यत्वमथवा संवृतास्यताम्। हनुग्रहः स तेन स्यात् कृच्छ्राच्चर्वणभाषणम्॥" मा.नि.। अन्यत्र

वातव्याधी, अच हनू संहत्यैव निश्चलौ तावास्यावयः। अ.द.५.५ अ।

**हनुमूलबन्धनास्थि।** क्ली। हन्वस्थिमूलयोर्बन्धनभूतयोरस्थ्नोः। च.शा.७अ.।

**हनुमोक्षः।** पुं। दन्तगतमुखरोगभेदे। निदानं यथा—"वातेन तैस्तैर्भाविस्तु हनुसन्धिर्विसंहतः। हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः॥" सु.नि. १६अ.।

**हन्तुः।** पुं। मत्यौ। हरे।

**हन्नः।** त्रि। हन्तपुरीषोत्सर्गे। अम.।

**हन्वस्थि।** क्ली। हनुदेशास्थनि। চোয়ালের হাড়। च.शा.७अ.।

**हपुषा।** स्त्री। वनिगुद्रव्यविशेषे। सा च मरोचहस्तवद्दीर्घकृष्णवर्णा। हनुफल इति ख्याता। हिं हौद्दबेर। See हवुषा।

**हमलः।** पुं। ककलासे। কাঁকলাস্। वै.निघ.।

**हयः।** पुं। घोटके। अम.।

**हयकातरा (रिका)।** स्त्री। अश्वकातरिकावृक्षे। हिं घोड़कातरा। रा.नि.व.५।

**हयगन्धम्।** क्ली। काचलवणे। रा.नि.व.६।

**हयगन्धा (न्धिका)।** स्त्री। अश्वगन्धायाम्। र.मा.। अ.द.द्रव्याधिकारे। वनयमान्यां। वनयोयान। रा.नि.व.६।

**हयघ्नः।** पुं। करवीरवृक्षे। वै.निघ.।

**हयघ्नी।** स्त्री। तेजोवत्याम्। তেজবতা। वै.निघ.।

**हयपुच्छिका (च्छी)।** स्त्री। माषपर्ण्याम्। माषाणी। अम.।

**हयप्रियः।** पुं। यवे। हे.च.। श्वेतकरवीरे। रा.नि.व.१०। स्त्री (या)। अश्वगन्धायाम्। रा.नि.व.४। खर्ज्जूर्याम्। रा.नि.व.११। यवे। वै.निघ.।

**हयभङ्गा।** स्त्री। पिण्डीखर्ज्जूरिकायाम्। वै.निघ.।

**हयमारः (कः)।** पुं। करवीरवृक्षे। रा.नि.व.१०। अम.। वै.निघ.२भ.च.सा.चि.वमिसागररसे। अयं व्रणदारणः। सु.सू.३६अ.।

**हयमारणः।** पुं। अश्वत्थवृक्षे। श.च.।

**हयवरप्रियः।** पुं। कदम्बवृक्षे। वै.निघ.।

**हयवाहनशङ्करः।** पुं। रक्तकाञ्चनवृक्षे। রক্তকাঞ্চনের গাছ। श.च.।

**हयवैरिः।** पुं। करवीरे। वै.निघ.।

**हयशाला।** स्त्री। अश्वशालायाम्।

**हया (यी)।** स्त्री। अश्वगन्धायाम्। रा.नि.व.४। घोटक्यां। जटा.। खर्ज्जूरिकायाम्।

**हयागारः।** पुं। अश्वशालायाम्। नकुल. १०अ.।

**हयानन्दः।** पुं। मुद्गे। মুগ। रा.नि.व.१६।

**हयायुर्व्वेदः।** पुं। अश्ववैद्यकशास्त्रे। तच शालिहोत्र-नकुल-जयदत्त-भोजादिकृतम्।

**हयारिः।** पुं। करवीरे। र.मा.।

**हयाशना।** स्त्री। शल्लकीवृक्षे। श.च.।

**हयाह्वता (ह्वा)।** स्त्री। अश्वगन्धायाम्। वै.निघ.।

**हयेष्टः।** पुं। यवे। रा.नि.व.१६।

**हय्यङ्गवीनम्।** क्ली। सद्योजातघृते। वै.निघ.।

**हरः।** पुं। गर्दभे। शब्दकल्प.।

**हरजः।** पुं। पारदे। कैय.धन.भ.। "हरजभुजगलौहम्।"

**हरणम्।** क्ली। शुक्रे। स्वर्णे। वराटके। उणालौ। शब्दकल्प.। शुचौ। मे.।

**हरतेजः।** क्ली। पारदे। रा.नि.व.१३।

**हरप्रियः।** पुं। धुस्तूरकवृक्षे। वै.निघ.२भ.चयचि. नवरत्नराजमृगाङ्के।

**हरवल्लभः।** पुं। शुक्लधुस्तूरे। শ্বেত ধুতুরা। वै.निघ.।

**हरहूरा।** स्त्री। द्राक्षाहरायाम्। হড়হড়ে। द्राक्षायां। शब्दकल्प.।

**हराक्षम्।** क्ली। रुद्राक्षे। रा.नि.व.११।

**हरिः।** पुं। विष्णौ। भेके। अम.। शुकपक्षिणि। টিয়া পাখী। सिंहे। रा.नि.व.१८ १९। मर्कटे। अश्वे। विका.। वर्हे। मुद्गे। মুগ। वै.निघ.। सर्पे। हंसे। मयूरे। कोकिले। श.र.। त्रि। हरिद्वर्णे। हे.च.।

**हरिक्रान्तः।** पुं। घोटके। विका.। स्त्री (न्ता)। विष्णुक्रान्तायाम्। কাল অপরাজিতা। रा.नि.व.५।

**हरिगन्धः ।** पुं । कुङ्कुमागरुचन्दने । वै.निघ. ।

**हरिग्रहः ।** पुं । अश्वस्य ग्रहविशेषे । तल्लक्षणं —“कम्पते पूर्व्वकायस्तु निश्चलो यस्य पश्चिमः । पश्चाद्भग्नो सकम्पश्च म्रियते हरिपीड़ितः ॥” ज. द.५७अ. ।

**हरिचन्दनम् ।** क्ली, पुं । कोद्वपदेशप्रसिद्धे कतविधचन्दनान्यतमे चन्दनविशेषे । গাছচন্দন । तत्पर्य्यायाः,—सुराहं इन्द्रचन्दनं दिव्यं दिविजं महागन्धं नन्दनजं लोहितजं । गुणाः—तिक्तं हिमं पित्तादोषघ्नं रक्तचन्दनवच्छ्रमानिलहरञ्च । रा. नि.व.१२ । क्ली । कुङ्कुमे । मे. । रक्तचन्दने । रा.नि. व.१२ । पद्मकेशरे । हला. ।

**हरिजीवकः ।** पुं । चणकवृक्षे । ছোলার গাছ । वै.निघ. ।

**हरिणः ।** पुं । मृगे, ताम्रवर्णमृगे । তাম্রহরিণ । तत्पर्य्यायाः,—मृगः कुरङ्गः वातायुः जिनयोनिः अजिनयोनिः मृड़ीकः सारङ्गः चलनः पृषतः पृषत् भीरुहृदयः रुरुः चारुलोचनः कुरङ्गमः ऋश्यः ऋष्यः रिश्यः रिष्यः शारङ्गः एणः एणकः क्रव्यघातनः कृष्णसारः सुलोचनः । तस्य पञ्चभेदा यथा —“ऋष्यः खड्गो रुरुश्चैव पृषतश्च मृगस्तथा । हरिणस्ताम्रवर्णः स्यादेणः कृष्णः प्रकीर्त्तितः ॥” कुरङ्ग ईषत्ताम्रः स्यादेणतुल्याकृतिर्महान् । ऋष्यो नीलाङ्गको लोके गवीव इति कीर्त्तितः । पृषतश्चन्द्रबिन्दुः स्याद्धरिणात् किञ्चिदल्पकः ॥ न्यङ्कुर्बहुविषाणोऽथ शम्बरो नयको महान् । राजीवस्तु मृगो ज्ञेयो राजिभिः परितो वृतः ॥ यो मृगः शृङ्गहीनः स्यात् स मुण्डीति निगद्यते ॥” प.मु. । “हरिणस्तास्र उच्यते ।” सु.सू. ४६अ. । गुणाः—“मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः । शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः ॥” कृष्णस्य गुणाः—“एणः कषायो मधुरः पित्तास्रकफनाशनः ।” राज.३य. । “एणस्य मांसं लघुशीतलञ्च त्रिदोषहृत् षड्रुचिदञ्च रुच्यं । कुरङ्गमांसं मधुरञ्च यद्वत् कफापहं पित्तहरं मरुद्भृत् ॥” रा.नि.व.१७ ।

**हरिणाक्षी ।** स्त्री । हट्टविलासिनीनामगन्धद्रव्ये । नखी । श.च. ।

**हरिणी ।** स्त्री । मञ्जी । अम. । मञ्जिष्ठायां । रा.नि.व.६ । स्वर्णयूथिकायाम् । স্বর্ণযূঁই । रा.नि.व.१० । विजयायाम् । সিদ্ধি । श्वेतयूथिकायाम् । শ্বেত যূঁই । वै.निघ. ।

**हरितम् ।** क्ली । स्थौनेयके । গাঁঠিয়ালা । रा. नि.व.१२ । कालिङ्गे । তরমুজ । वै.निघ. ।

**हरितः ।** पुं । मन्थानकतृणे । रा.नि.व.८ । यवे । प.मु. । नीलदूर्व्वायाम् । वै.निघ. । सिंहे । शब्दकल्पः । सविषमण्डूके । বিষযুক্ত ব্যাঙ । सु. ।

**हरितकम् ।** क्ली । शाके । आर्द्रकादौ । अम. । “अन्यत्र माषहरितकशुष्कशाकफलभक्ष्येभ्यः ।” च. सू.८अ. ।

**हरितच्छदः ।** पुं । श्वेतशिग्रौ । শ্বেত সজিনা । मद.३.७ ।

**हरितनेत्रः ।** पुं । उलूके । পেঁচা । त्रिका. ।

**हरितपत्रिका ।** स्त्री । पाच्यां । गन्धपत्रा । সুগন্ধশাকবিশেষ, কর্পূরশাক । रा.नि.व.१० ।

**हरितयवः ।** पुं । निःशूकयवे । वै.निघ. ।

**हरितलता ।** स्त्री । पाषीलतायां । वै.निघ. ।

**हरितशाकः ।** पुं । शिग्रुशाके । সজিনার শাক । रा.नि.व.७ ।

**हरितपत्रा ।** स्त्री । गन्धपत्रा । সুগন্ধশাকবিশেষ । रा.नि.व.१० ।

**हरिता ।** स्त्री । दूर्व्वायां । मे. । जयन्त्याम् । জয়ন্তীগাছ । रा.नि.व.४ । हरिद्रायाम् । रा.नि. व.६ । कपिलद्राक्षायां । नीलदूर्व्वायां । रा.नि.व. ८ । पाच्याम् । কর্পূরশাক । रा.नि.व.१० । ब्राह्मीक्षुपे । ব্রাহ্মীশাক । वै.निघ. ।

**हरिताल(क)म् ।** क्ली । पीतवर्ण-खनिजोपविषभेदे । হরিতাল । तत्पर्य्यायाः,—विस्रगन्धि पिञ्जरं पिञ्जरकं पिङ्गलं पीतलं चल आलं ताल कर्व्वूरं गोदन्तं पीतनं नटभूषणं नटमण्डन हरिबीजं सिद्धधातुः लोमहृत् वंशपत्रकं वर्णकं पीतं गोरोचं चित्राङ्गं वैदलं तालकं कनकरसः काञ्चनकं विड़ालकं विस्रगन्धं पिङ्गं पिङ्गसार गौरीललितं । प.मु. । तच्च पत्रपिण्डभेदेन द्विविधम्, तयोराद्यं श्रेष्ठम् । गुणाः—“तयोराद्यं गुणैः श्रेष्ठं ततो हीनगुणं परम् । स्वर्णवर्णं गुरु स्निग्धं सपत्रञ्चाभ्रपत्रवत् । पत्राख्यं तालकं विद्यात् गुणाढ्यं तद्रसायनम् ॥ निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा

गत। स्त्रीदृष्यदारकं मस्तगुण्यं तथिच्छतालकं। हरितालं कटु स्निग्धं कषायोष्णं हरेदिषम्। कण्डू-कुष्ठास्यरोगास्रकफपित्तकचव्रणान्॥” भा·प्र·१म·धा·व·। तच्छोधनादि यथा—“तालकं पोट्टलीं बद्धा संचूर्ण्य काञ्जिके क्षिपेत्। दोलायन्त्रेण यामैकं ततः कुष्माण्डजे रसे। तिलतैले पचेद्यामं यामञ्च त्रैफले जले॥ दोलायन्त्रे चतुर्यामं भस्मीभूतं न दोषकृत्। तथा शालिरार्मतिकाः शिग्रुटङ्गणं लवणं गुडम्। तालकार्द्धेन संमिश्य छिद्रमूषां निरोधयेत्। पुटेत् पातालयन्त्रेण सत्त्वं पतति निश्चयम्॥” रस·चि·७अ·।

**हरितालः (लुकः)।** पुं। स्वनामख्यातपक्षि-विशेषे। इल्देना घुघु। हिं हरियाल। गुणाः—“हरितालोऽल्पविट्कः स्यात् कषायो हिमदीप्तनुः। रक्तपित्तप्रशमनस्तृष्णाघ्नो वातकोपनः॥” राज· ३प·। दूर्व्वायां। वै·निघ·।

**हरितालिका (ली)।** स्त्री। दूर्व्वायाम्। त्रिका·। मे·। खड्गलतायाम्। विश्व·।

**हरिताश्म (न्)।** क्ली। तुत्थके। तुँते। रा·नि·व·१३।

**हरिताक्षः।** पुं। चक्षुष्य दुष्टग्रहभेदे। तद्-गृहीते अकस्मात् चक्षुषी रक्ता बिन्दवो भवन्ति। वालकस्य जायते। ज·र·५०अ·।

**हरित्।** स्त्री। हरिद्रायां। रा·नि·व६। पुं, क्ली। वर्णे। मे·। पुं। हरिते। मृग। उ·च·। त्रि। शाकवर्णे।

**हरित्कान्दः।** स्त्री। कन्दविशेषे। वै·निघ·।

**हरित्पर्णम्।** क्ली। मूलके। मूला। प·मु·।

**हरिद(त्)र्भः।** पुं। हरिद्वर्णकुशे, शरपत्रकुशे। শ্বেত কুশ। तत्पर्य्यायाः,—खरपत्रः हृद्यच्छदः पृथुच्छदः गौरी सुवदर्भः दीर्घवृत्तः पवित्रकः। गुणाः—दर्भसदृशाः। रा·नि·व·८।

**हरिदश्वः।** पुं। सूर्य्ये। अर्कवृक्षे। আকন্দ গাছ। अम·।

**हरिद्दर्भः।** पुं। कुशभेदे। শ্বেত কুশ। भा·। See कुशः।

**हरिद्रकः।** पुं। हरिद्रावृक्षे। वै निघ·।

**हरिद्रवः।** पुं। नागकेशरचूर्णे। त्रिका·।

**हरिद्रा (द्री)।** स्त्री। (Curcuma longa.) स्वनामख्यातकन्दौषधी। इल्दि। हिं हर्दी, हलदी। मं हळदी। कं अरसिन। तें पसुप। दा· हलद। गुजं· हळद। तत्पर्य्यायाः,—निशाह्वा काञ्चनी पीता वरवर्णिनी यामिनी वर्णदा वरा वर्णिनी हेमरागिणी गन्धपलाशिका सुवर्णवर्णा युवतिः युवती मङ्गलप्रदा कावेरी उमा वर्णवती गौरी निशा पीतवालुका हेमरागा भद्रवासा घर्षणी पीतिका रजनी निशा मेहघ्नी मङ्गला वर्णिनी रात्रिनाशिका हरित् रञ्जनी स्वर्णवर्णा सुवर्णा शिवा दीर्घरागा हलद्दी वरा वराङ्गी अनेष्टा वर्णदात्री पविवा हरिता विषघ्नी पिङ्गा मङ्गल्या मङ्गला लक्ष्मीः भद्रा शिफा शोभना श्रीमा सुभगाह्वया श्यामा जयन्तिका। गुणाः—कफ-पित्तास्रश·प्रकण्डूव्रणापहा। राज·। कटुतिक्तोष्णा कफवातास्रकुष्ठघ्नी मेहकण्डूव्रणघ्नी वर्णकरी च। रा·नि·व·६। च·द·कफज्व·चि·। हरिद्रा चतुर्धा हरिद्रा कर्पूरहरिद्रा वनहरिद्रा दारुहरिद्रा चेति। विशेषाः पर्य्याये मृग्याः। तच्छुद्धिः वर्गशब्दे मृग्या। “हरिद्रा क्रियते स्थूला क्षेत्रे या कुङ्कुम-च्छविः।” भेद·।

**हरिद्राङ्गः।** पुं। हरितालपक्षिणि। इल्देना घुघु। श·च·।

**हरिद्रादिवर्गः।** पुं। हरिद्रा-दारुहरिद्रा-यष्टयाह्व कलसी-कुटजोद्भव-द्रव्येषु। गुणा—आमातो-सारघ्नः दोषपाचकः मेद·कफाढ्यवातस्तन्यदोषघ्नश्च। वा·सू·१५अ·।

**हरिद्राद्वयम्।** क्ली। हरिद्रा-दारुहरिद्रयोः। दिव्या एका, पश्चाद्वासंज्ञान्या। चक्रपाणिः। वा·सू· हरिद्रादि·।“हरिद्राद्वयपथ्यानां……।”

**हरिद्रापञ्चकम्।** क्ली। हरिद्रादारुहरिद्रादारु हरिद्रागन्धोषिकद्रुतेषु। वै·निघ·।

**हरिद्रापत्रकण्टका।** स्त्री। दार्व्वाम्। दारु-हरिद्रा। वै·निघ·।

**हरिद्राभः।** पुं। पीतशालवृक्षे। পেয়াশাল। कर्पूरे। श·च·। त्रि। पीतवर्णे।

**हरिद्रामेहः।** पुं। पित्तजन्य-प्रमेहभेदे। अत्र रोगी सदाहं हरिद्रावर्णं मेहति। सु·नि·६अ·।

**हरिद्रुः।** स्त्री। दारुहरिद्रायां। দারুহরিদ্রা। मं हळदिवा। कं विविलु। तत्पर्य्यायाः,—पीत-काष्ठः पीतकः पीतकद्रुमः पीतदारुः कादम्बकः

सुपुष्पः सुरागः। गुणाः—शीतलः तिक्तः मङ्गल्यः वान्तिपित्तघ्नः देहकान्तिकरः बल्यः नानात्वग्दोषनाशकश्च। रा.नि.व.९। अम.। सा पञ्चधा—सैव कालीयकः प्रोक्तस्तथा कालेयकोऽपि च। पीतद्रुश्च हरिद्रुश्च पीतदारु कपीतकं। दार्व्वी-निम्नागुणा किन्तु नेत्रकर्णास्यरोगनुत्॥" भा.।

**हरिनामा (न्)**। पुं। मुद्गे। मूग। त्रिका.।

**हरिनेत्रम्**। क्ली। श्वेतपद्मे। रा.नि.व.१०। पुं। पेचके। त्रिका.।

**हरिन्मणिः**। पुं। मरकतमणौ। पान्ना इति ख्याते। रा.नि.व.१३।

**हरिन्मुद्गः**। पुं। हरिमुद्गे। हारिमूग। रा.नि.व.१६। See हरिमुद्गः।

**हरिपर्णम्**। क्ली। कृष्णचन्दने। प.मु.। मूलके। हे.च.।

**हरिप्रियम्**। क्ली। उशीरनामगन्धद्रव्ये। गन्धवेणा। रा.नि.व.१२। कृष्णचन्दने। कालियाकाठ। श.च.। पुं। श्यामाकधान्ये। श्यामाधान। प.मु.। कदम्बवृक्षे। र.मा.। पीत-भृङ्गराजे। पीत भीमराज। रा.नि.व.४। See मार्कवः। विष्णुकन्दे। रा.नि.व.७। करवीरवृक्षे। बन्धुजीववृक्षे। वाकुली। रा.नि.व.१०। शङ्खे। शाँख्। रा.नि.व.१८।

**हरिप्रिया**। स्त्री। तुलसीवृक्षे। रा.नि.व.१०। खर्जूरीवृक्षे। খেজুর গাছ। रा.नि.व.११।

**हरिवालुकम्**। क्ली। एलवालुके। এলবালুক। प.मु.। रा.नि.व.४।

**हरिभद्रम्**। क्ली। एलवालुके। এলবালুক। श.च.। See एलवालुकम्।

**हरिभद्रकम्** } **हरिभव्यकम्** } क्ली। कुष्ठौषधौ। कुड़। वै.निघ.।

**हरिमन्थः**। पुं। अग्निमन्थे। गणिरि। प.मु.। र.मा.सं.। चणके। ছোলা গাছ। रा.नि.व.१६।

**हरिमन्थकः (जः)**। पुं। चणके। भ.टी.भ.। अम.। कृष्णमुद्गे। কাল মুগ। हे.च.।

**हरिमुद्गः**। पुं। (phaseolus mungo.) मासदमुद्गविशेषे। घासिमूग, हारिमूग। हिं हरिमुङ्। मं हरियेरमुंग। कं हसरहेसरु। गुणाः—कषायः मधुरः पित्तकफघ्नः रक्तमूत्र-रोगघ्नः शीतलः लघुः दीपनश्च। रा.नि.व.१६।

**हरिमूला**। स्त्री। शालपर्ण्याम्। वै.निघ.।

**हरियालः**। पुं। हरिताल-पक्षिणि। হরিয়াল ঘুঘু।

**हरिलोचनः**। पुं। कर्कटे। त्रिका.। पेचके। शब्दकल्प।

**हरिवल्लभः**। पुं। मुचुकुन्दवृक्षे। মুচ্‌কুন্দ ফুলের গাছ। स्त्री (भा)। जवापुष्पवृक्षे। रा.नि.व.१०।२३। तुलसीवृक्षे। रा.नि.व.१०।

**हरिवासः**। पुं। पीतभृङ्गराजे। পীতপুষ্প ভীমরাজ। रा.नि.व.४। See मार्कवः। अश्वत्थवृक्षे। मद.व.५।

**हरिवालुकम्**। क्ली। एलवालुके।

**हरिबीजम्**। क्ली। हरिताले। जटा.। "हरितालं हरेर्वीर्यं खचोवीर्यं मनःशिला। पारदं शिववीर्यं स्याद् गन्धकं पार्व्वतीरजः।"

**हरिहरः**। पुं। रसाधिकार-रसमधिकारे।

**हरीतकी**। स्त्री। (Terminalia chebula.) Chebulie myrobalan. स्वनामख्यातफलवृक्षे। হরীতকীগাছ। हिं हर। मं हिरड़ा। कं अणिले। तैं करक्काय्। उत्. हरिड़ा, करेड़ा। दा. हिं कलुरा। ता. कड़क्के। तत्पर्य्यायाः,—अभया अव्यथा पथ्या वयःस्था पूतना अमृता हैमवती चेतकी श्रेयसी शिवा सुधा वायस्था बल्या रसायनफला जया विजया पाचनी प्रपथ्या प्रमथा शाका रुद्रप्रिया वनितिक्ता प्रकृष्टा सुधोद्भवा चेतनकी रोहिणी जीवनिका जीवन्ती जीवप्रिया भिषग्वरा भिषक्प्रिया प्राणदा जीन्या देवी दिव्या। रा. गुणाः—हरीतकीफलम् अनुलोमनं (अर्थात् मलपाकं कृत्वा बन्धञ्च भित्त्वाधो नयति), तथा रसायनं शोधनञ्च। हरीतकी सप्तभेदा—"विजया रोहिणी चैव पूतना चामृताभया। जीवन्ती चेतकी चेति पथ्यायाः सप्त जातयः॥" तासु विजया अलाबुवृत्ता सर्व्वरोगहिता च। रोहिणी वृत्ता व्रणरोपणी च। पूतना अस्थिमती सूक्ष्मा प्रलेपे हिता च। अमृता मांसला शोधनी च। अभया पञ्चरेखान्विता चक्षुष्या च। जीवन्ती स्वर्णवर्णा सर्व्वरोगहिता च। चेतकी त्रिरेखा चूर्णार्थे प्रशस्ता च। पुनः श्वेतकृष्णभेदेन

चेतकी द्विधा, तयोः शुक्ला षड़ङ्गुलायता, कृष्णा चैकाङ्गुला। आसु कस्याश्चित् स्वादेन कस्याश्चिद् गन्धेन कस्याश्चिद्दर्शनेन कस्याश्चित् स्पर्शनेन भेदो-ऽनुमीयते। चेतकीतरुमूलमुपसृप्तस्य यस्य कस्यचित् प्राणिनो विरेचनं भवति। एतस्याश्च चेतक्या धारणेन नरो यावत्तिष्ठति तावदेव तस्य विरेको भवति। एषा दृष्टार्त्त-सुकुमार-कृशानामौषध-द्वेषिणामतीव प्रशस्ता। आसु च सप्तजातीयहरीतकीषु विजयैव प्रधाना सुखप्रयोगा सुलभा सर्व्वरोगेषु प्रशस्ता च। हरीतक्याः स्वादुतिक्तकषायरस-सद्भावेन पित्तहरत्वं, कटु-तिक्त-कषायरससद्भावेन पित्तहरत्वं, कटुतिक्तकषायरससद्भावेन कफहरत्वं, अम्लरससद्भावेन वातनाशित्वञ्चास्ति। स्वभावत एव प्रभावविशेषात् वातनाशित्वम्। तथास्या मज्जसु स्नायुषु त्वक्षु अस्थिषु च यथासंख्यं स्वादम्ल-तिक्तकटूत्कटरसा व्यवस्थिता एव। या हरीतकी नवीना स्निग्धा घना वृत्ता गुरुश्च, या च जले क्षिप्ता निमज्जति, सैव प्रशस्ता गुणदा च। हरीतकीचर्व्वणेनाग्निवृद्धिः। पिष्टसेवनेन मलशुद्धिः। क्वाथसेवनेन कोष्ठबद्धता। भर्जितसेवनेन च त्रिदोषनाशित्वं भवति। भोजनेन सह हरीतकीसेवनेन बुद्धीन्द्रियेन्द्रियबलं वर्द्धं वातपित्तकफनाशः मल-मूत्रशुद्धिः भवति। भोजनोत्तरं भक्षणेनान्नपान-जनितवातादिदोषशान्तिरपि भवत्येव। लवणेन भक्षिता कफनाशः, शर्करया पित्तनाशः, घृतेन वातजरोगनाशो गुड़ेन च सर्व्वरोगनाशो भवति। तथा वर्षादिषु षट्सु ऋतुषु यथाक्रमं सैन्धवशर्करा-शुण्ठीपिप्पलीमधुगुड़ैः सेवनीया। किन्त्वेतामेव पथ-श्रान्तदुर्व्वलदग्धक्षयाजीर्णादि-निपीड़ितपित्तवियुक्त-शोणितगर्भिण्यश्च न कदापि हरीतकीं व्यवहरेयुः। भा.पू.१भ.। "हरस्य भवने जाता हरिता च स्वभावतः। हरयेत् सर्व्वरोगांश्च तेन प्रोक्ता हरी-तकी ॥" इति निरुक्तिः। "पञ्चास्यातिक्ता मधुरा तदन्तः। त्वगम्लतः सा कटुरुणवीर्य्या। सार्द्ध-मलशाम्लकषाययुक्ता हरीतकी पञ्चरसा प्रतीयम् ॥" रा.नि.व.११। "पञ्चेन्द्रियार्थो रसभुजः स्नोमय-विषकर्षिताः। सेवेरन्नामयानेते क्षुधाद्यपहिंसाय ये ॥" च.चि.१प.। मालहरीतक्याम्। स्वर्गि-हरीतकी। इं. चक्रो.चि. अग्निमुखचूर्णे।

**हरीतकीतैलम्।** क्ली। हरीतकीफलोद्भवतैले। गुणाः—शीतलं कषायं मधुरं कटु सर्व्वव्याधिहरं दृष्यं नानाविधलग्दोषघ्नञ्च। रा.नि.प.१५।

**हरीतकीवीजम्।** क्ली। हरीतक्यस्थनि। हरीतकीर आँटी। गुणाः—चक्षुष्यं गुरु वातघ्नं पित्तघ्नञ्च। वै.निघ.।

**हरीन्द्रवैशेषिकः।** पुं। वैद्यकग्रन्थभेदे। स्त्री (का)। रेणुकायाम्। रेणुक। च.मृ.२च.शिरो-विरेचने। निर्गुण्ड्याम्। निशिन्दा। कम्पिल्लके। कमलागुँड़ि। वै.निघ.छिक्काचि.नस्ये।

**हरीषा (सा)।** स्त्री। मांसव्यञ्जनभेदे। हिं मांस। तत्पाकविधिर्यथा—पाकपात्रे तु रहति मांसखण्डानि निःक्षिपेत्। पानीयं प्रचुरं सर्पिः प्रभूतंहिङ्गु-जीरकं ॥ हरिद्रामार्द्रकं शुण्ठीलवण-मरिचानि च। तण्डुलांश्चापि गोधूमान् जम्बीराणां रसान् बहून् ॥ यथा सर्व्वाणि वस्तूनि सुपक्वानि भवन्ति हि। तथा पचेत्तु निपुणो बहुमण्डस्थिति-र्यथा ॥ गुणाः—एषा हरीषा बलकृत् वातपित्तापहा गुरुः। शीतोष्णा शुक्रदा स्निग्धा सरा सन्धान-कारिणी ॥"

**हरेणुः (कः)।** पुं। हरवणके। बड़ छोला। प.सु.। पर्पटके। क्षेत्पापड़ा। वै.निघ.२भ. कल्याणघृते, वाचादितैले। ; चय.चि.गुड़्च्यादि मोदके। कलाये। मटर। रा.नि.व.१६। "गत-पुष्पा-हरेणुभिः।" च.द.प.च.चि.।

**हरेणुका।** स्त्री। रेणुकायाम्। रेणुक। रा. नि.प.६। सु.सू.३८च. पिप्पल्यादिः। कलायभेदे। अरहर कलाय। रा.नि.प.१४। सु.सू.४६प.।

**हर्म्म (न्)।** क्ली। जृम्भायाम्। श.र.।

**हर्म्मुटः।** पुं। कच्छपे। शब्दकल्पः।

**हर्य्यः।** पुं। विभीतकवृक्षे। वै.निघ.।

**हर्य्यक्षः।** पुं। सिंहे। रा.नि.व.१९।

**हर्पः।** पुं। मदनफलवृक्षे। मयनाफलेर गाछ। रा.नि.व.८।

**हर्पकीर्त्तिः।** पुं। वैद्यकसारग्रन्थकारे।

**हर्पणम्।** क्ली। शुक्रधातौ। रा.नि.व.१८। पुं। नेत्ररोगभेदे। श.र.।

**हर्प(र्पि)णी।** स्त्री। कपिकच्छ्वाम्। आल-कुशी। वै.निघ.। भद्रायां। सिंहि। शब्दकल्पः।

**हर्पणीक्रिया।** स्त्री। सुरापानजन्यहर्षोत्पादक-क्रियाम्। "नातिपीय मतो मद्यं शरीरसमदन्य

वा। कुर्य्यान्मदात्ययं तस्मादिष्यते हर्षणी क्रिया॥" वा.चि.०क.।

**हर्षयित्नुः**। पुं। पुत्रे। क्ली। स्वर्णे। मे.। त्रि। हर्षजनके।

**हर्षसम्भवम्**। क्ली। शुक्रे। वै.निघ.।

**हर्षुलः**। पुं। मृगे।

**हलच्छदः**। पुं। कृष्णमिर्चो। काल गजिना। वै.निघ.।

**हलदी (द्दी) (द्रा)**। स्त्री। हरिद्रायाम्। रा.नि.व.६।

**हलराक्षसम्**। क्ली। भाद्युत्ययूपे। रा.नि.व.४।

**हललोमशम्**। क्ली। काशीशे। हिराकस्। रा.नि.व.१३।

**हला**। स्त्री। मद्ये। सख्यौ। अनेकार्थकोषः। लाङ्गलीवृक्षे। विषलाङ्गुलिया। भेष.कुष्ठ.चि. षड्विन्दुतैले।

**हलाहलम्**। क्ली, पुं। विषभेदे। प.मु.। नक्रसर्पे। आञ्जनाई। त्रिका.।

**हलिनकः**। पुं। केतकवृक्षे। राज.६प.।

**हलिनी**। स्त्री। लाङ्गलिकायाम्। विषलाङ्गलिया। प.मु.।

**हलिनीप्रियः**। पुं। कदम्बवृक्षे। कदम गाछ। प.मु.।

**हलिप्रियः**। पुं। कदम्बवृक्षे। अम.।

**हलिप्रिया**। स्त्री। मदिरायाम्। मद, ताड़ी। रा.नि.व.१४।

**हली**। स्त्री। कलिकारीक्षुपे। विषलाङ्गुलिया। रा.नि.व.४। भैष.कर्णरी.चि.। मद्यसामान्ये। रा.नि.व.१४।

**हलीनः**। पुं। शाकवृक्षे। शेगुन गाछ। श. च.। केतकवृक्षे। प.मु.।

**हलीमकः**। पुं। पाण्डुरोगभेदे। तस्य लक्षणं —"यदा तु पाण्डोर्वर्णः स्याद्धरितः श्यावपीतकः। बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वम् मृदुज्वरः। स्त्रीष्वहर्षोऽङ्गमर्द्दश्च दाहस्तृष्णारुचिर्भ्रमः। हलीमकं तदा तस्य विद्यादनिलपित्ततः॥" मा.नि.।

**हल्लकम्**। क्ली। रक्तकह्लारे। लाल सुन्दीफुल। अम.। तत्पर्य्यायाः,—रक्तसन्ध्यकं रक्तसौगन्धिकं रोचना अल्पगन्धं सौमाख्यं रक्तकैरवं।

**हविः**। पुं। अग्निमन्थवृक्षे। अंगथ्थु। र.मा.।

**हविः (स्)**। क्ली। घृते। रा.नि.व.१५। अग्नौ। जले। शब्दकल्प:।

**हविमण्डला**। स्त्री। रक्त-लज्जालुकायाम्। वै.निघ.।

**हविर्गन्धा**। स्त्री। शमीवृक्षे। रा.नि.व.८।

**हविर्मन्थः**। पुं। गणिकारिकायाम्। र.मा.।

**हविष्यम्**। क्ली। घृते। चिन्ता.।

**हवुषा**। स्त्री। स्वनामख्यातफले। हवुष फल। हिं हौहवेर। कं होवेर। मं यरवुटव्डे। एतत् फलं द्विविधम्। तयोरेकं मत्स्यसदृशं विस्रगन्धञ्च, द्वितीयम् अश्वत्थफलसदृशम् मत्स्यगन्धञ्च। प्रथमायाः पर्य्यायाः,—हपुषा हवुषा विस्रा विस्रगन्धा विगन्धिका। द्वितीयायास्तु स्वल्पफला कच्छघ्नी ध्माङ्क्षमाशिनी प्लीहशत्रुः विषघ्नी कफघ्नी अपरा लिसा। "पूर्व्वा तु पञ्चनाम्नी स्यादपरा सप्तधाभिधा।" उभयविधमेव फलं गुणैस्तुल्यं "केवलमाकारतो भिन्नम्। भा.। गुणाः—कटुतिक्तोष्णा गुरुः शूलघ्नी प्रदरोदरविड्बन्धशूलगुल्मार्शोघ्नी च। रा.नि.व.४। गुप्तासमुद्भवे। श. नित्यानन्दरवे।

**हसन्तिका**। स्त्री। वह्निमकटिकायां। शा.चि. १प.। मल्लिकापुष्पवृक्षे।

**हसन्ती**। स्त्री। मल्लिकायाम्। मे.।

**हस्तः**। पुं। करे। हात। स तु गर्भस्थस्य मासद्वयेन भवति। तत्पर्य्यायाः,—पाणिः शमः शयः पञ्चशाखः करः कुलिः भुजादलः। रा.नि.व.१८।

**हस्तज्योड़िः (ड़ी)**। पुं। स्वनामख्यातमहाकन्दशाके। करजोड़ा। हिं मं हाताजोड़ी। गुणाः—रसबन्धकृत् वश्यकृच। रा.नि.व.७।

**हस्तपर्णः**। पुं। रक्तैरण्डे। वै.निघ.।

**हस्तपुच्छम्**। क्ली। करपृष्ठे। हातेर पोंछा। त्रिका.।

**हस्तमानम्**। क्ली। आमध्याङ्गुलिकूर्परं विस्तृते पाणौ। रा.नि.व.१८।

**हस्तसन्धिः**। स्त्री नलिकाग्नौ। वै.निघ.।

**हस्ताङ्गुलिः ।** पुं । कराङ्गुली । হাতের আঙুল । भरिप ।

**हस्ताञ्जनः ।** पुं । पर्वाञ्जनवृक्षे । वै.निघ. ।

**हस्ताभरणः ।** पुं । सर्पविशेषे । सु.कल्प.४ अ. । See सर्पः ।

**हस्तासनकम् ।** क्ली । करस्थासनकीफले । शब्दकल्प. ।

**हस्तिः ।** पुं । कदलीवृक्ष । गजे । अजमोदायाम् । वै.निघ. ।

**हस्तिकन्दः ।** पुं । कोङ्कणे प्रसिद्धे स्थूलकन्दाकारकन्दशाके । হাঁসা বড় মূলা । मं हस्तिकन्द । कं महिरकसियगड्डे । तत्पर्य्यायाः,—हस्तिपत्रः स्थूलकन्दः अतिकन्दकः हस्तपत्रः अतिपत्रः हस्तिकर्णः सुकर्णकः त्वग्दोषारिः कुष्ठहन्ता गिरिवासी नगाश्रयः गजकन्दः नागकन्दः । गुणाः—कटुकत्वः कफवातरोगघ्नः त्वग्दोषहरः महाकुष्ठविषविसर्पघ्नश्च । रा.नि.व.७ । "हस्तिकन्दो गुदयोग्नी गण्डहृद्विपदी मतः ।" चरि.।६च. ।

**हस्तिकरञ्जः (कः) ।** पुं । महाकरञ्जवृक्षे । ডহর করঞ্জ । रा.नि.व.९ ।

**हस्तिकर्णः (पलाशः) ।** पुं । गजकर्णाकारैकदले पलाशभेदे । भूपलाश इति लोके । হাতিকর্ণ পলাশ । तैं । विद्रास्तदपुवेदु । सु.सू.३८अ. कफशोधने । तद्गुणाः—"हस्तिकर्णः परं पथ्योमेधायुर्बलवर्द्धनः ।" राज.६प. । एरण्डवृक्षे । मे. । रक्तैरण्डे । वै.निघ.अजी.चि. बिलम्बिकायोगे । हस्तिकन्दे । হাঁসা মুলা । रा.नि.व.७ । एतद्वीजतैलं मुलकतैलवत् । See विभीतकतैलम् ।

**हस्तिकर्णकः ।** पुं । किंशुकवृक्षभेदे । হাতি-কর্ণপলাশ । अ.र. ।

**हस्तिकर्णदलः ।** पुं । हस्तिकर्णपलाशे । হাতি-কর্ণপলাশ । प.मु. ।

**हस्तिकर्णी ।** स्त्री । काकालुके । वै.निघ.३अ. । पाण्डु.चि. । वा.व्या.चि.षड्शीतिगुग्गुलौ ।

**हस्तिकक्ष्यः ।** पुं । सिंहे । व्याघ्रे । शब्दकल्प. । कणभकीटभेदे । ना.नि. ।

**हस्तिकारवी ।** स्त्री । अजमोदायाम् । वनयमानी । रा नि.व.६ ।

**हस्तिदावण्डा ।** स्त्री । गजपिप्पल्याम् । वै.निघ. ।

**हस्तिकोलः ।** पुं । राजबदरे । वै.निघ. ।

**हस्तिकोलिः (ली) ।** पुं, स्त्री । बदरीभेदे । ডাঙাকুল । आमकोलीति पूर्व्वबङ्गे । प.मु. । गद.इ.६ ।

**हस्तिकोशातकी ।** स्त्री । महाकोषातक्याम् । धुन्दुल । वै.निघ. ।

**हस्तिघोषा ।** स्त्री । महाकोशातकीनामकफलशाकविशेषे । धुन्दुल । हिं नेनुआ । मं पारिसदोड़का । कं दरहीरे । तत्पर्य्यायाः,—घोषी महत्-पुष्पा सवोलिका महाकोशातकी । गुणाः—स्निग्धा मधुरा वाताग्निवातहृत् हृद्या कृमिकरी ज्वरदोषघ्नी च । रा.नि.व.७ । रक्तपित्तानिलघ्नी च । भा.पू.१भ.शा.व. ।

**हस्तिघोषातकी ।** स्त्री । हस्तिघोषायाम् । र.मा. ।

**हस्तिचारिणी ।** स्त्री । महाकरञ्जे । ডহর-করঞ্জ । रा.नि.व.९ ।

**हस्तिदन्त(क)म् ।** क्ली । मूलके । मूला । रा.नि.व.७ । प्र.मा. ।

**हस्तिदन्तः ।** पुं । मूलके । मूला । करिदन्ते । अ.र. ।

**हस्तिदन्तफला ।** स्त्री । एर्व्वारुके । গোমুক । रा.नि.व.७ ।

**हस्तिदन्ती ।** स्त्री । महेन्द्रवारुण्याम् । कस्तदन्त्याम् । वै.निघ. । बृहत्फलगोडुम्बायाम्, नागदन्त्याम् । বড় গোমুক । च.मू.१अ. ।

**हस्तिनी ।** स्त्री । महेन्द्रवारुण्याम् । বড় রাখালশশা । हस्तिगुण्डीवृक्षे । महाकरञ्जे । ডহর করঞ্জ । वै.निघ. । करिण्याम् । হাতিনী ।

**हस्तिनीघृतम् ।** क्ली । हस्तिनीनवनीतजघृते । হাতিনীর দুধের ঘি । गुणाः—कफपित्तविषकृमिघ्नं कषायं लघु विटभि तिक्तम् अग्निकरञ्च । रा.नि.व.१५ ।

**हस्तिनीदधि ।** क्ली । करिणीदुग्धजातदधनि । হাতিনীর দুধের দৈ । मं हातिनीदहि । कं आनेयमोसरु । गुणाः—कषायद्रवयुक्तं पलितघ्नं

रुचिदं कान्तिदं वपाशरीरगं वीर्यवर्द्धनं बलदञ्च। रा.नि.व.१५।

**हस्तिनीदुग्धम्।** क्ली। हस्तिनीजातक्षीरे। हातिनीर दुध। मं हस्तिनीचे दुध। कं आनेय-हालु। गुणाः—मधुरं हृद्यं गुरु कषायं स्निग्धं स्थैर्यकरं शीतलं चक्षुष्यं बलवर्द्धनञ्च। रा.नि.व. १५।

**हस्तिनीनवनीतम्।** क्ली। हस्तिनीदुग्ध-भवनवनीते। हातिनीर दुधेर माखन। गुणाः—कषायं शीतलं लघु तिक्तं विष्टम्भि कृमिघ्नं कफ-पित्तघ्नञ्च। रा.नि.व.१५।

**हस्तिपत्रः।** पुं। हस्तिकन्दे। रा.नि.व.७।

**हस्तिपर्णः।** पुं। महाकोषातक्याम्। धुन्धुल। भा.पू.१भ.शा.व.।

**हस्तिपर्णिका (नी)।** स्त्री। राजकोषा-तक्याम्। रा.नि.व.७।

**हस्तिपर्णी।** स्त्री। मोरटलतायाम्। लता-कराड़। प.मु.। मूर्व्वायाम्। र.मा.। कर्कट्याम्। काँकुड़ गाछ। रा.नि.व.२१।

**हस्तिपात् (द्)।** पुं। पिच्छाली। दोनर-भोग रुटू। प.मु.।

**हस्तिपिप्पली।** स्त्री। गजपिप्पल्याम्। गज-पिप्पुल। प.मु.। चविकायाम्। रस.र. पार्श्वरो-हृते।

**हस्तिवुषा।** स्त्री। कदलीवृक्षे। भा.।

**हस्तिमगधा।** स्त्री। गजपिप्पल्याम्। वै.निघ.।

**हस्तिमदः।** पुं। गजमदे। दाक्षिणात्ये स्वनाम्ना प्रसिद्धे औषधिविशेषे। गुणाः—स्निग्धस्तिक्तः अप-स्मारघ्नः लेख्यः विषघ्नः कण्डूकुष्ठव्रणदद्रुविसर्पघ्नश्च। रा.नि.व.६।

**हस्तिमयूरकः (का)।** पुं, स्त्री। अजमोदा-याम्। मद.व.२। इन्द्रवारुण्याम्। वै.निघ.२भ. ज्व.चि.।

**हस्तिमूत्रम्।** क्ली। करिमूत्रे। गुणाः—तिक्तोष्णं लवणं वातघ्नम् भूतघ्नं कषायं शूलघ्नं हिक्का-श्वासघ्नञ्च। रा.नि.व.१५। "गजमूत्रप्रलेपश्च कण्डूदद्रुविसर्पनुत्।" चि.८भ.।

**हस्तिमेहः।** पुं। वातजन्यप्रमेहे। तत्र रोगी मत्तमातङ्गवदजस्रमक्षं मेहति। सु.नि. ६भ.।

**हस्तिरुचिः।** पुं। वैद्यवल्लभनामग्रन्थकारे।

**हस्तिरोहणकः।** पुं। महाकरञ्जे। बड़ करञ्जगाछ। रा.नि.व.९।

**हस्तिलोध्रकः।** पुं। लोध्रवृक्षे। रा.नि.व.६।

**हस्तिवारुणी।** स्त्री। महाकरञ्जे। वै.निघ.।

**हस्तिविषाणकः (णी)।** पुं, स्त्री। कदली-वृक्षे। रा.नि.व.११।२३।

**हस्तिशुण्डा (ण्डिका, ण्डी)।** स्त्री। स्वनाम-ख्यातक्षुद्रक्षुपे। हातिशुँड़े। मं कं नेलवाल, मलदावरे। तत्पर्य्यायाः,—हस्तिनी भूरुही वल्लि-च्छदा नागदन्ती नागशुण्डी शुण्डी धूसरपत्रिका गुणाः—कटूष्णा सन्निपातज्वरघ्नी विषमाग्निनी च। रा.नि.व.५। सु.चि.२२भ. भूम्यामलक्याम्। र.सा.सं. इन्द्रवारुणीलतायाम्। हाथीशुँड़ी। गजशुण्डा-याम्। वै.निघ.।

**हस्तिश्यामकः।** पुं। तृणधान्यविशेषे। हातिया श्यामा। गुणाः—श्यामाकवत्। च.सू.२७भ.। धातु-शोषणः विपाके भम्नः वायुवर्द्धनः रुक्षश्च। राज.।

**हस्ती (स्तिन्)।** पुं। स्वनामख्याते विलम्बित-जातीयकूलचरपशुविशेषे। हाती। हिं हाथी। तस्य चत्वारो जातयः; यथा—"भद्रो मन्द्रो मृगो मिश्रश्चासौ गजजातयः।" हे.च.। राजनिघण्टुस्तु त्रिविधमाह भद्रमन्द(न्द्र)मृगभेदेन। तन्मांसगुणाः —गुरु स्निग्धं शीतलं श्लेष्मकरं पुष्टिकरं दुर्जरम् अग्निमान्द्यकरञ्च। रा.नि.व.१७।१९। "स्वादम्ल-लवणास्तेषां गजाः श्लेष्मानिलापहाः।" सु.सू.४६भ.। हस्तिपृष्ठारोहणं वातवर्द्धकं दृढदार्ढ्यकरं बलाग्नि-वृद्धिकारि च। स्त्री। कदल्याम्। अजमोदायाम्। रा.नि.व.२३।

**हस्त्यायुर्वेदः।** पुं। पालकाप्यगजचिकित्सा-शास्त्रे।

**हस्त्यालुकम्।** क्ली। दीर्घालुकभेदे।

**हहलम्।** क्ली। हलाहलविषे। श.च.।

**हाङ्गरः।** पुं। नक्रे, जलजन्तुविशेषे। हाङ्गर। श.च.।

**हाटकम्।** क्ली। सुवर्णे। रा.नि.व.१३। धुस्तूर-फले। अन.।

**हाटकमाक्षिकम्** । क्ली । स्वर्णमाक्षिके । वै.निघ. ।

**हानव्यः** । पुं । हनुभवदन्ते । वै.निघ. ।

**हासुः (लुः)** । पुं । दन्ते । त्रिका. ।

**हापुत्रिका (त्री)** । स्त्री । Wagtail. खञ्जनाख्यपक्षिणि । खञ्जनिकायां । त्रिका. ।

**हाफिका** । स्त्री । जृम्भायाम् । हाई । हारा. ।

**हाफुः** । पुं । बहिर्वेदे । आदिम् । च.सु. ।

**हायनः (कः)** । पुं । शालिधान्यविशेषे । भा.पू.१म.धा.व. । गुणाः—शालिवत् । च.सू.२७अ. ।

**हारकः** । पुं । शाखोटवृक्षे । श्याओड़ा गाछ । श.च. ।

**हारहा(हू)रा** । स्त्री । कपिलद्राक्षायाम् । रा.नि.व.११ । हारा. । भा.म.१म.मद्यात्ययचि. । "भारतीहारहूरा ।"

**हारहूरः** । पुं । मद्ये । उ.प. ।

**हारा** । स्त्री । गन्धारोहवृक्षे । वै.निघ. ।

**हारिकण्ठः** । पुं । कोकिले । मे. ।

**हारितः (कः)** । पुं । हारीतपक्षिणि । हरतेन घुघु । जटा. ।

**हारितकम्** । क्ली । शाके । श.र. ।

**हारिद्रः** । पुं । विषभेदे । हरिद्रावर्ण स्थावरविष । यथा—"हरिद्रातुल्यमूलो यो हारिद्रः स उदाहृतः ।" सु. । कदम्बवृक्षे । मे. । हरिद्रावृक्षे । (कः) सन्निपातज्वरे । गलवैद्यकम् ।

**हारिद्रसन्निपातः** । पुं । सन्निपातज्वरभेदे, येन सर्व्वाङ्गमेव हरिद्रावर्णं भवति । यथा—"हारिद्रदेहनखनेत्र-कराङ्घ्रि-तालु-निष्ठीवनादिकमलं दयदादिशति यः । हारिद्रकः स कथितः......॥" वै.निघ. ।

**हारिद्रुः** । पुं । हरिद्रावृक्षे । वै.निघ. । हरिद्रुवृक्षे ।

**हारी (रिन्)** । पुं । कदम्बवृक्षे । कोकिले । स्त्री (री) । मुक्तायाम् । श.र. ।

**हारीतः (कः)** । पुं । हरितालपक्षिणि । हरतेन घुघु । बम्. तिथगिरपक्षी । तत्पर्य्यायाः,—हरितालः हरितालकः हरितालुकः हरितः हरकुरः । तन्मांसगुणाः—स्वादु उष्णं रूक्षं ईषद्वात-घ्नं कफपित्तकरदीपनञ्च । रा.नि.व.१७ । "सप्तौ कपिञ्जल तथा हारीतको मतः ।" आङ्गिरस-गोत्रे । तन्नामकग्रन्थकारे ।

**हार्य्यम्** । क्ली । रक्ताञ्जने । वै.निघ. ।

**हार्य्यः (वृक्षः)** । पुं । विभीतकवृक्षे । बहेड़ा गाछ । रा.नि.व.११ ।

**हालह(हा)लम्** । क्ली । विषभेदे । हलाहल विष । श.र. ।

**हाला** । स्त्री । कण्टकपाटलितायां । भाड़ड़ा । प.म. । चि.क्र.क.सोमदेवचि. । सारपो-मद्ये । ताड़ी । मद्यसामान्ये । रा.नि.व.१४ ।

**हालाहलम्** । क्ली, पुं । हलाहल इति ख्याते मूलविषे । सु.कल्प.२अ. । तत्पर्य्यायाः,—हला-हलं हलहलं हालहलं हाहालं । स्वरूपं यथा—"गोस्त-नाभफलो गुच्छस्तालपत्रच्छदस्तथा । तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः । असौ हालाहलो-ज्ञेयः किष्किन्धायां हिमालये । दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते ॥" भा.पू.१म.विषव. । See मूलविषम् ।

**हालाहलगणा (हली)** । स्त्री । मद्ये । श्म । वै.निघ. ।

**हालाहलधरः** । पुं । सर्पे । श.र. ।

**हालाहला** । स्त्री । क्षुद्रमूषिकायाम् । नेंटे इन्दुर । जटा. ।

**हालिनी** । स्त्री । कललिकायाम् । आञ्जनाई । उ.प. ।

**हाली** । स्त्री । तालादिमद्ये । ताड़ि । रा.नि.व.१४ । मद्ये । अम. ।

**हालुः** । पुं । दन्ते ।

**हासः** । पुं । कहुठे । वर्णगुप्तिशाविशेष । स्त्री (सा) । शालीपुष्पवृक्षे । ५.निघ. ।

**हास्यफलः** । पुं । विकङ्कतवृक्षे । वैंची गाछ । रा.नि.व.११ ।

**हाह(हा)लम्** । क्ली । हलाहलविषे । श.च. ।

**हिंसारुः (सीरुः)** । पुं । व्याघ्रे । त्रिका. । व्याक. ।

**हिंसालुकः** । पुं । खादुक-कुक्कुरे । कामड़ा-कुत्ता । हारा. ।

**हिंसा (स्रा)** । स्त्री । जटामांस्याम् । रा.नि.

व.१२। कण्टकार्य्याम्। भैष.योनिरो.चि., श्वास.बा.चि.स्वेदे। शिरायाम्। श.च.। कण्टकपालीलतायाम्। गुड्कौंडुली, कोणेकड़ा। प.मु. च.द.ग्रन्थि.चि.। सु.चि.१०ष.। च.द. हिक्काश्वासचि.हिंसाद्यघृते। गवेधुकायाम्। गड़गड़ा। श.च.।

**हिक्का।** स्त्री। तन्नामकरोगे। तस्या निदानं—"विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः। शीतपानाशनस्नान-रजोधूमातपानिलैः। व्यायामकर्म्मभाराध्ववेगघातापतर्पणैः। हिक्का श्वासश्च कासश्च नृणां समुपजायते॥" स्वरूपं निरुक्तिश्च—"मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन्। सघोषवानाशु हिनस्ति यस्मात्ततस्तु हिक्केत्यभिधीयते बुधैः॥" तद्भेदाः संख्या च—"अन्नजाम् यमलां क्षुद्रां गम्भीरां महतीं तथा। वायुः कफेनानुगतः पञ्च हिक्काः करोति च॥" पूर्व्वरूपं यथा—"कण्ठोरसोर्गुरुत्वञ्च वदनस्य कषायता। हिक्कानां पूर्व्वरूपाणि कुक्षेराटोप एव च॥" यमलामाह—"चिरेण यमलैर्वेगैः या हिक्का संप्रवर्त्तते। कम्पयन्ती शिरोग्रीवां यमलां तां विनिर्द्दिशेत्॥" अन्नजामाह—"पानान्नैरतिसम्भुक्तैः सहसा पीडितोऽनिलः। हिक्कां यात्यूर्द्ध्वगो भूत्वा तां विद्यादन्नजां भिषक्॥" गम्भीरा यथा—"नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी। अनेकोपद्रववती गम्भीरा नाम सा स्मृता॥" महती यथा—"मर्म्माण्यापीडयन्तीव सततं या प्रवर्त्तते। महाहिक्केति सा ज्ञेया सर्व्वगात्रप्रकम्पिनी॥" भा.।

**हिङ्गु।** क्ली। (Ferula asafoetida or Ferula alliacea.) स्वनामख्यातपण्यद्रव्ये। हिं। हिं यन्. हिंग। मं हङ्गु। फं हिङ्गु। तें इंगुर। तत्पर्य्यायाः,—सहस्रवेधि जतु बाह्लीकं जातुकं बाह्लिकं बाह्ली रमठं रामठध्वनिः रामठं जन्तुघ्नं शूलद्विट् पिण्याकं अहिपी मधुरा सूपधूपनं केसरं शूलहृत् उग्रगन्धं भूतारि जन्तुनाशनं सूपाङ्गं रक्षोघ्नं उग्रवीर्य्यं अगूढ़गन्धं जरणं भेदनं दीपनं। गुणाः—उष्णं कटुत्वं क्रिमिवातकफघ्नं विबन्धाध्मानशूलघ्नं चक्षुष्यं गुल्मघ्नञ्च। रा.नि.व.६। भा.पू.१भ.रूपकादौ। "उष्णं तुल्यकं हिङ्गु।" च.सू.२७.। तीक्ष्णं कटुरसं शूलाजीर्णविबन्धघ्नं लघु उष्णं पाचनं स्निग्धं दीपनं कफवातघ्नञ्च। राज.। पाचनं रुच्यं क्रिमिशूलोदरापहञ्च। मद.व.२। "लघूष्णं पाचनं हिङ्गु दीपनं कफ-वातजित्। कटु स्निग्धं सरं तीक्ष्णं शूलाजीर्णविबन्धनुत्॥" सु. सू.४६ष.।

**हिङ्गुनाड़िका।** स्त्री। नाड़ीहिङ्गौ। हिङ्गेड़ा। रा.नि.व.६।

**हिङ्गुनिर्यासः।** पुं। निम्बवृक्षे। प.मु.। हिङ्गुरसे। हिं। मे.।

**हिङ्गुपत्रः।** पुं। इङ्गुदीवृक्षे। रा.नि.व.८।

**हिङ्गुपत्री (र्णी)।** स्त्री। स्वनामख्यातवृक्षे। वंशपत्रतृण। तत्पर्य्यायाः,—कारवी पृथुः पृथुला पृथ्वी पृथ्विका कवरी कर्व्वरी त्वक्पत्री बाष्पका बाष्पा बाष्पिका बाष्पी पत्री दीर्घिका तन्वी दारुपत्री हिङ्गुफला विल्ला। गुणाः—कटुः तिक्ता तीक्ष्णा उष्णा वातकफक्रिमिघ्नी रुच्या दीपनी पाचनी च। रा.नि.व.८। अपिच—"हृद्बस्तिरुग्विबन्धार्शःश्लेष्मगुल्मानिलापहा।"

**हिङ्गुफला।** स्त्री। हिङ्गुपत्र्याम्। वै.निघ.।

**हिङ्गु(ङ्गू)लम् (लिः)।** क्ली, पुं। स्वनामख्यातपारदभूयिष्ठद्रव्ये। हिंगूल। तत्पर्य्यायाः,—हिङ्गुलं हिङ्गुलुः रक्तं मर्कटशीर्षं दरदं दरदः रसः हंसपादं चक्र चन्द्रः कपिशीर्षकं रसस्थानं हिङ्गुलिः रक्तपारदं रक्तपारदः बर्ब्बरं सुरङ्गं सुगरं रञ्जनं म्लेच्छं चित्राङ्गं चूर्णपारदं चर्म्मारकं मणिरागं रसोद्भवं रञ्जकं रसगर्भं। अम.। जटा.। तच्च त्रिविधम्—चर्म्मार-शुकतुण्डक-हंसपादभेदेन। तत्र चर्म्मारः शुक्लवर्णः शुकतुण्डकः पीतः हंसपादो जवाकुसुमसदृशः, स एव महोत्तमः। र. सा. सं.टी.। मधुरं तिक्तम् उष्णं वातकफघ्नं विदोषद्वन्द्वदोषज्वरघ्नञ्च। रा.नि.व.१३। अन्यस्य गुणाः—"तिक्तं कषायं कटु हिङ्गुलं स्यात् नेत्रामयघ्नं कफपित्तहारि। हृल्लासकुष्ठज्वरकामलाश्च। प्लीहामवातौ च गरं निहन्ति॥ ऊर्द्ध्वपातनयुक्त्या तु उत्सृष्टयन्त्रपाचितम्। हिङ्गुलं तस्य सूतन्तु शुद्धमेवं न शोधयेत्॥" भा.पू.१भ.उ.रस व.। शोधनविधिः—"मेषीदुग्धेन दरदं सप्तवारञ्च भावितम्। अम्लवर्गैस्तथा शुद्धिमायात्येवं न संशयः। आर्द्रकस्वरसे भाव्यं शुद्धभवति हिङ्गुलम्॥" मा.कौ.। तस्मात्पारदबहिष्करणविधिः—हिङ्गुलं निम्बुरसैः प्रहरं यावत् मर्द्दयित्वा अधःपिठर्यां दत्त्वा सप्तदृढं पातयेत्। तेन ऊर्द्ध्वपिठरीलग्नं रसं गृह्णीयात्। भा. मध्यमूले। चातु इति लोके। श.च.।

**हिङ्गुलिका ।** स्त्री । कण्टकार्य्याम् । श.च. ।

**हिङ्गुली (इन्) ।** पुं । हिङ्गुलि । स्त्री । वार्त्ताकी । प.मु. । इन्द्रव्याम् । भा. ।

**हिङ्गुलुः ।** पुं, क्ली । हिङ्गुलि । अम. । र.सा.सं. ।

**हिङ्गुलेश्वरः ।** पुं । रसोऽयं वातप्रधानज्वरे हितः । हिङ्गुलं विषं पिप्पली च समभागं जलेन सद्दर्य्य विधा वटी कार्य्या । हिङ्गुलेश्वरसिता मधुना देया । र.सा.सं. ।

**हिङ्गुलोत्थरसः ।** पुं । हिङ्गुलनिष्काशितपारदे । तत्प्रकारयन्—"अथवा हिङ्गुलात् सूतं पातयेत् तन्निगद्यते । जम्बीरनिम्बुनीरेण मर्दितो हिङ्गुलो दिनम् । ऊर्द्ध्वपातनयन्त्रेण पाद्यः स्यान्निर्म्मलो रसः ॥" र.सा.सं. ।

**हिङ्गुशिरा(टि)का ।** स्त्री । वंशपत्रीतृणे । र.मा. ।

**हिज्जः (लः) ।** पुं । (Barringtonia acmtangula. Syn. Eugenia acutangula.) स्वनामख्यातवृक्षे । हिजल गाछ । हिं समुन्दरफल, इजर । मं पर्वन्तु । कं तीरेगचगिलु । उत्. किझोली । बम्. समुन्दरफल, परेल । तत्पर्य्यायाः,—निचुलः इज्जलः पिचुलः नदीकान्तः अम्बुजः धनदः कान्तः अम्बुजः दीर्घपत्रकः नदीजः रक्तः कार्म्मुकः । "जलवेतसवद् वैद्यो हिज्जलोऽयं विषापहः ॥" गुणाः—कटुः उष्णः पवित्रः भूतघ्नः वातरोगघ्नः वक्षरदारदोषघ्नश्च । श.च. । रा.नि.व. ८ । जलवेतसे । भा. ।

**हिण्डि(ण्डी)रः ।** पुं । समुद्रफेने । प.मु. । वार्त्ताकौ । मे. । दाडिमवृक्षे । वै.निघ. । वृषके । उणा. ।

**हितम् ।** क्ली । पथ्ये । रा.नि.व.२० ।

**हितकः ।** पुं । शिशौ । रा.नि.व.१९ ।

**हितलोहितः ।** पुं । तुषरयावनाली । जोन ज्नार । रा.नि.व.१६ ।

**हितावली ।** स्त्री । स्वनामख्यातवृक्षे । हिं हियावली । गुणाः—सारका तिक्ता शोथघ्नी गुल्मघ्नी उदरक्रिमिकुष्ठघ्नी कण्डूघ्नी च । रा.नि.व.९ ।

**हितावल्ली ।** स्त्री । हितावल्लीवृक्षे । वै.निघ. ।

**हिताहितम् ।** क्ली । पथ्यापथ्ये । च.सू.१४. ।

**हिन्तालः ।** पुं । स्वनामख्यातवृक्षे, महातालि । हिन्ताल् इति दक्षिणदेशे प्रसिद्धः । हैंताल गाछ । तत्पर्य्यायाः,—मरुरोटः स्थिराङ्घ्रिपः हिमदामकः वीनालः स्थूलतालः वहवलः इड्ढुमः स्थिरपत्रः द्विधालिख्यः स्थिरापत्रः बल्विराङ्घ्रिकः गर्भस्रावी मोनतालः भीषणः वहुकण्टकः षत्रसारः इड्वालः । तत्फलपर्य्यायौ—उद्वेगं किरीटं । गुणाः—मधुराम्लः कफकरः पित्तदाहघ्नः श्रमघ्नः तृष्णाहरः शीतलः वातदोषघ्नश्च । रा.नि.व.९ ।

**हिन्दोलनम् ।** क्ली । भेषजेन गर्भपातने । सु.नि.८८. ।

**हिमम् ।** क्ली । पद्मकनामसुगन्धकाष्ठे । पद्मकाष्ठे । रा.नि.व.१२ । उशीरे । वै.निघ.सुदर्शनचूर्णे । वङ्गे । ङ्गाः । रा.नि.व.१३ । रक्तचन्दने । रा.नि.व.१२ । नवनीते । श.च. । मौक्तिके । रा.नि.व.१३ । पुं । चन्दनवृक्षे । कर्पूरे । रा.नि.व. २३ । तुषारे । हिम । तत्पर्य्यायाः,—नीहारः इन्द्राग्निधूमः खवाष्पः रजनीजलम् । गुणः—कफवायुवर्द्धकः । राज.१प. । लक्षणं—हिमवच्छिखरादिभ्यः द्रवीभूयाभिवर्षति । यत्तदेव हिमं हैमं जलमाहुर्मनोषिणः ॥" भा. ।

**हिम-ऋतुः ।** पुं । हेमन्तकाले ।

**हिमकः ।** पुं । विकङ्कतवृक्षे । रा.नि.व.४।९ ।

**हिमकरः ।** पुं । कर्पूरे । रा.नि.व.१२ ।

**हिमकूटः ।** पुं । शिशिरर्त्तौ । रा.नि.व.२१ ।

**हिमजा ।** स्त्री । गर्य्याम् । शठ्यां । मे. । पालङ्कशाके । पालङ्शाक । प.मु. । क्षीरिण्याम् । थिङ्कडे । रा.नि.व.५ ।

**हिमज्झटिः ।** पुं । कुज्झटिकायाम् । क्षोयाशा ।

**हिमतैलम् ।** क्ली । कर्पूरतैले । रा.नि.व.१५ ।

**हिमदुग्धा ।** स्त्री । क्षीरिण्याम् । थिरूडे । रा.नि.व.५ ।

**हिमद्रुमः ।** पुं । महानिम्बे । रा.नि.व.९ ।

**हिमपुष्पः ।** पुं । आरग्वधवृक्षे ।

**हिमपूतिः ।** त्रि । उग्रदुर्गन्धे । भा.म.४अ. मग.चि. ।

**हिमवालुकः (का) ।** पुं, स्त्री । कर्पूरे । रा.नि.व.१२।२३ । अम. ।

**हिमयुतः ।** पुं । भीमसेनीकर्पूरे । वै.निघ. ।

**हिमविधिः ।** पुं । द्रव्यपलं षट्पलजले चिरं विशोषितं हिम इत्युच्यते । स एव शीतकषायः । पाने च तस्य मानं पलद्वयम् । भा० ।

**हिमशर्करा ।** स्त्री । यावनालशर्करायां । रा. नि.व.१४ ।

**हिमसंहतिः ।** स्त्री । हिमराशौ । वरफ । चम. ।

**हिमहासकः ।** पुं । हिन्तालवृक्षे । हेंताल गाछ । श.र. ।

**हिमांशुः ।** पुं । कर्पूरे । रा.नि.व.१२ । रौप्ये । वै.निघ. । चन्द्रे ।

**हिमांशुभिख्यम् ।** क्ली । रौप्य । हे.च. ।

**हिमा ।** स्त्री । सूक्ष्मैलायाम् । रेणुके । भद्रमुस्तायाम् । रा.नि.व.६ । पृक्कायाम् । रा.नि.व.२१ । चविकाख्ये । रा नि.व.८ ।

**हिमागमः ।** पुं । हेमन्तकाले । रा.नि.व.२१ ।

**हिमाद्रिजा ।** स्त्री । चीरिण्याम् । खिरुई । रा.नि.व.५ ।

**हिमानी ।** स्त्री । यावनाल-शर्करायाम् । हिमसंहती । वरफेर स्तूप ।

**हिमाब्दम् ।** क्ली । उत्पले । शुन्दिफूल । रा. नि.व.१० ।

**हिमारातिः ।** पुं । चित्रकवृक्षे । चिता । अर्कवृक्षे । आकन्द । चम. ।

**हिमालयः ।** पुं । शुक्लखदिरे । श.च. । स्त्री । भूम्यामलक्याम् । रा.नि.व ५ ।

**हिमाली ।** स्त्री । यावनालशर्करायाम् । रा. नि.व.१४ ।

**हिमावती (नी) ।** स्त्री । स्वनामख्यातौषधौ । हिमावन्तीति भाषा । गुणाः—सरा तिक्ता शोथगुल्मोदरघ्नी कृमिकुष्ठार्शःकण्डूतिघ्नी च । रा.नि. व६ । चीरिण्यां । स्वर्णचीरिण्यां । वै.निघ. ।

**हिमाह्वया ।** स्त्री । स्वर्णजीवन्त्याम् । रा.नि. व३ । See स्वर्णजीवन्ती ।

**हिमाह्वः (यः) ।** पुं । कर्पूरे । त्रिका. ।

**हिमिका ।** स्त्री । वर्षोपले । हिमसङ्घाते । शिशिरबिन्दौ । शब्दकल्प: ।

**हिमोत्तरा ।** स्त्री । कपिलद्राक्षायाम् । रा. नि.व.११ ।

**हिमोत्था (त्पन्ना) ।** स्त्री । यावनालीशर्करायाम् । रा.नि.व.१४ ।

**हिमोदकम् ।** क्ली । हिमजले । वरफेर जल । शीतल जल । वै.निघ. ।

**हिमोद्भवा (द्भूता) ।** स्त्री । चीरिण्याम् । खिरुई । रा.नि.व.५ । शट्याम् । वै.निघ. ।

**हिमोपमः ।** पुं । प्रवाले । वै.निघ. ।

**हिरणम् ।** क्ली । स्वर्णे । रजते । धुस्तूरे । वराटके । त्रिका. ।

**हिरण्यम् ।** क्ली । सुवर्णे । रा.नि.व.१३ । र. सा.सं.ज्वरचूडामणौ । कपर्द्दके । त्रिका. । रेतसि । परिमाणभेदे । त्रिका. । पुं । गुग्गुलुभेदे । "हिरण्याख्यस्तु हैमाभः ।"

**हिरण्यकोषः ।** पुं । स्वर्णे । रौप्ये । हे.च. ।

**हिरण्यपुष्पी ।** स्त्री । लाङ्गलिकायां । विषलाङ्गलिका । सु.शा.१०ध. ।

**हिरण्यरेताः (स्) ।** पुं । चित्रकवृक्षे । चिता गाछ । चम. ।

**हिरण्यक्षीरा ।** स्त्री । अष्टचत्वारिंशत्स्वर्णक्षीरनामौषधौ । सु.चि.३०अ. ।

**हिरण्यक्षीरि ।** स्त्री । स्वर्णक्षीर्याम् ।

**हिलमुची ।** स्त्री । हिलमोचिकायां । हिञ्चे । प.मु. ।

**हिलमोचिः ।** स्त्री । हिलमोचिकायाम् । हिञ्चे । प.मु. ।

**हिलमोचिका (ची) ।** स्त्री । स्वनामख्यातजलशाकविशेषे । हिञ्चे शाक । हिं हरहुच् । बम्. हरहुची । उत्. हिर्मिचा । तत्पर्य्यायाः,— "रोची मत्स्याक्षी विकृतपर्णी हिलची मन्त्री विषघ्नी मत्स्याधी चक्राङ्गी मोची जलजन्मा ब्राह्मी शङ्खधरा चापारी । भा.म.४भ.मसूरि.चि. । हिलमोचीभवं द्रव्यम् ।" गुणाः—तिक्ता सरा शोषकुष्ठकफपित्तघ्नी । भा.पू.१भ.शा.व. । चुक्रे । रा.नि.व. ० । चुक्रवास्तुके । टकपालो । रा.नि.व.०२३ ।

**हिल्लः ।** पुं । (Turdus giuinus.) शरारिनामपक्षिविशेषे । शरालि पाखी ।

**हीनकर्णः ।** पुं । तन्नामककर्णबन्धनाकृतौ । पक्षयपर्य्यन्तयोर्हीनमांसः । सु.सू.१६अ. ।

**हीनाङ्गः ।** त्रि । विकलाङ्गे । जटा. ।

**हीनाङ्गी ।** स्त्री । क्षुद्रपिपीलिकायाम् । हे.च. ।

**हीन्तालः ।** पुं । हिन्तालवृक्षे । हेँतालगाछ । अ.टी. ।

**हीर(क)म् ।** क्ली, पुं । (Diamond.) वज्रे । हिरे । तत्पर्य्यायाः,—वज्रः हीरः दधीच्यस्थि वज्रकं सूचीमुखं वरारकं रत्नमुख्यं अभेद्यं दृढाङ्गं हीरं विराटजः राजपट्टः राजावर्त्तः । तद्गुणाः,—स्वादुः कषायः शीतः सारकः कान्तिकरः चक्षुर्हितकरः ; धारणे तु पापालक्ष्मीनाशकश्च । रा.नि.व. १३ । स च श्वेतलोहितपीतकृष्णभेदेन चतुर्व्विधः— यथाक्रमं द्विजः क्षत्रः वैश्यः शूद्र इति । तत्र प्रथमो रसायने, द्वितीयो व्याधिनाशे, तृतीयो धनदाने देहदार्ढ्ये, चतुर्थश्च व्याधौ वयस्तम्भने च प्रयुज्यते । अस्य चाकारभेदेन स्त्रीपुंनपुंसकत्वं लभ्यम् । विन्दुरेखाहीनो रक्तः पुमान्, रेखायुक्तः षड्स्रयुक्तः स्त्री च । त्रिकोणो नपुंसकम् । मारितस्य हीरकस्य गुणाः—“आयुः पुष्टिं बलं वीर्य्यं वर्णं सौख्यं करोति च । सेवितं सर्व्वरोगघ्नं मृतं वज्रं न संशयः । अशुद्धं कुरुते वज्रं कुष्ठं पार्श्वव्यथां तथा । पाण्डुताम् पङ्गुलत्वञ्च तस्मात् संशोध्य मारयेत् ॥” हीरकमारणम्—“व्याघ्रीकन्दोदरे क्षिप्तं सप्तधा पुटितः पविः । हयमूत्रस्य निर्व्वापात् शुद्धः प्रतिपुटं भवेत् । मत्कुणमूत्रे तप्तं हीरकं सेचयेत् सुधीः । सप्तधा भियते सत्यं नात्र कार्य्या विचारणा । भस्मीभावं गतो दुग्धा वज्रवत् कुरुते तनुम् ॥” आ.क्ली. । स्त्री । पिपीलिकायाम् । गाम्भाय्याम् । रा.नि.व.९ ।

**हीलम् ।** क्ली । शुक्रे ।

**हीलकम् ।** क्ली । गौड़ीमद्ये । गुड़ेर मद ।

**हुड़ः (डूः) ।** पुं । मेषे । हुड़ा । त्रिका. । रा.नि. व.१९ । स्त्री । मेषाम् ।

**हुड़िका ।** स्त्री । अङ्कोलवृक्षे । आँकड़गाछ । वै.निघ. ।

**हुड़ुक्कः ।** पुं । दात्यूहपक्षिणि । मे. ।

**हुड़ुत्वः ।** पुं । मटचिपिटे । हुड़ुगभाङ्गा । श ना. ।

**हुण्डः ।** पुं । व्याघ्रे । ग्राम्यशूकरे । मन्दबुद्धः ।

**हुण्डनम् ।** क्ली । मस्तकादीनाम् अन्तःप्रवेशे वक्रतायां वा । (धातूनामनेकार्थत्वात्) ।

अन्ये त्वाहुः शिरोहुण्डनं केशभूमिस्फुटनं, शङ्ख-ललाटे च महावेदना । नासाहुण्डनं आघ्राणशक्तिलोपः । दृष्टिहुण्डनं दृष्टिव्युदासः । वक्षुहुण्डनं हृदयोपरोधः । ग्रीवास्तम्भः । इति जेज्जड़ः ।

**हुतभुक् (ज्) ।** पुं । अग्नौ । चित्रके ।

**हुतवहः ।** पुं । चित्रके । अग्नौ ।

**हुताशः ।** पुं । अग्नौ । अग्निवेशे । च. । चित्रकवृक्षे । भा.म भगाधिकारे । च.द.कुष्ठ.चि. ।

**हुताशनः ।** पुं । चित्रकवृक्षे । सु.चि.३७अ. ।

**हुताशनरसः ।** पुं । अग्निमान्द्ये रसः । गन्धकः १ भ. पारदः १ भ. मरटङ्कणं १ भ. शुद्धविषं ३ भ. मरिचं ८भ. एकत्र निम्बूरसेन मर्दयित्वा मुद्गमाना वटी कार्य्या । अनु. आर्द्रकरसः । भा. । भैष. ।

**हुताशवेशः ।** पुं । अग्निवेशे । च.च.इ.टी. ।

**हूरवः ।** पुं । शृगाले । त्रिका. ।

**हुलुः ।** पुं । मेषे ।

**हृच्छूलम् ।** क्ली । वक्षःशूले । निदा. ।

**हृतगन्धा ।** स्त्री । कुस्तुम्बुरौ । काँटाधनिया । वै.निघ. ।

**हृत्कम्पः ।** पुं । हृदयस्य कम्पे । निदा. ।

**हृत्पद्मः ।** पुं । हृदये ।

**हृत्पापाणः ।** पुं । मनःशिलायाम् । भैष.कुष्ठ.चि. षड्विन्दुतैले ।

**हृत्प्राणः ।** पुं । श्वासरोगे । रा.नि.व.२० ।

**हृदयम् ।** क्ली । मनसि । त्रिका. । चेतनास्थाने । तच्च शोणितकफप्रसादजम् । यदाश्रया हि धमन्यः प्राणवहाः तस्य च चेतनास्थानत्वादस्मिन् तमसा वृते प्राणिनः स्वपन्ति । तत्स्वरूपं यथा—“पुण्डरीकेण सदृशं हृदयं स्यादधोमुखं । जाग्रतस्तद्विकसति स्वपतश्च निमीलति ॥” सु.शा.४अ. । वक्षसि । रा. नि.व.१८ ।

**हृदयचरः ।** पुं । कफजक्रिमिभेदे । च.चि.७अ. ।

**हृदयदीपकः ।** पुं । बोपदेवकृत-वैद्यकग्रन्थे ।

**हृदयस्थानम् ।** क्ली । वक्षसि । हे.च. ।

**हृदयात्मा (न्) ।** पुं । कङ्कपक्षिणि । श.च. ।

**हृदयादकः ।** पुं । कफजक्रिमौ । निदा. ।

**हृदयोपशरणम् ।** क्ली । हृदयोपद्रवभेदे । च सू.१५अ. ।

**हृद्**। क्ली। हृदये। वक्षसि। रा.नि.व.१८। मनसि। अम.।

**हृदामयः**। पुं। हृद्रोगे।

**हृन्नदः**। पुं। हृद्रोगे। रा.नि.व.२०।

**हृद्ग्रन्थः (न्थिः)**। पुं। विद्रधिरोगे। रा.नि.व.२०।

**हृद्याची**। स्त्री। हिलावल्याम्। वै.निघ.रस.वा.व्या.चि.विषगर्भतैले।

**हृद्यम्**। क्ली। त्वचि। गुड़त्वक्। जीरके। कपित्थे। वै.निघ.। त्रि.। मनोरमे।

**हृद्यगन्धम्**। क्ली। शुक्लजीरके। श.च.। सौवर्चललवणे। काचलवणे। रा.नि.व.६। पुं। बिल्ववृक्षे। रा.नि.व.११। स्त्री (न्धा)। जातीपुष्पवृक्षे। रा.नि.व.१०। अजमोदायाम्। रा.नि.व.६।

**हृद्यगन्धि**। क्ली। कृष्णजीरके। कृष्णजीरे। र.मा.।

**हृद्यवर्गः**। पुं। हृदयहिते महाकषायवर्गे। स चतुर्थस्य चतुर्थदशकः। यथा—आम्राम्रातकलिकुचकरमर्द-वृक्षाम्लाम्लवेतस-कुवलबदरदाडिममातुलुङ्गेषु। च.सू.४अ.।

**हृद्या**। स्त्री। वृद्धिनामौषधे। रा.नि.व.११। नागवल्याम्। পান। जीरकवृक्षे। शतपत्रीपुष्पे। মেডেনী ফুল। मुरायाम्। मुरामांसी। वै.निघ.। हृद्यौषधौ। मे.।

**हृद्रुक्**, **हृद्रोगः**। पुं। हृदयरोगे। হৃদয়ের রোগ। रा.नि.व.२०। निदाननिदानो यथा—"अत्युष्णगुर्वम्लकषायतिक्तैः श्रमाभिघाताध्यशनप्रसङ्गैः। सचिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः। दूषयित्वा रसन्दोषा विगुणा हृदयं गताः। हृदि बाधां प्रकुर्वन्ति हृद्रोगन्तं प्रचक्षते॥" मा.नि.।

**हृद्रोगवैरी (रिन्)**। पुं। अर्जुनवृक्षे। श.च.।

**हृदयस्थकः**। पुं। आमाशये। जठरे। श.च.।

**हृद्व्रणः**। पुं। विद्रधौ। रा.नि.व.२०।

**हृल्लक्ष्मीः**। स्त्री। चुद्रतुलस्यां। वै.निघ.।

**हृल्लासः**। पुं। उपस्थितवमनत्ववत् उत्क्लेशे। भा.। हिक्कायाम्। "हिक्का हेक्का च हृल्लासः।" हे.च.।

**हृषीकम्**। क्ली। कर्णेन्द्रियं। अम.।

**हृष्टः**। पुं। काकविशेषे। कश्चित्।

**हृष्टरोमा (मन्)**। त्रि। रोमाञ्चिते।

**हेक्का**। स्त्री। हिक्कायाम्। हे.च.।

**हेतुः**। पुं। उपलब्धिकारणे। यत्तु येन विना न स्यात् तत्तस्य हेतुः। तत्पर्यायश्च। निदानं कारणं हेतुर्निमित्तं निबन्धनं मूलम् आयतनं प्रत्ययश्च। भा.। "हेतुर्नामोपलब्धिकारणं तत्प्रत्यक्षानुमानैतिह्यौपम्यैर्हेतुभिर्यदुपलभ्यते तत्तत्त्वम्।" च.वि.८अ.। स्त्री। महामतावर्याम्।

**हेतुविपरीतः**। त्रि। कारणविपरीते (औषधादौ)। यथा—शीतज्वरे शुण्ठ्यादिकम्। श्रमादौ मांसरसायने। दिवास्वप्नजे कफे रात्रिजागरणादौ। मा.नि.। वि.र.।

**हेतुविपर्य्यस्तार्थकारी**। त्रि। हेतुविपरीतार्थकारिणि (औषधादौ)। यथा—पित्तजन्यशोथे पित्तजनकोष्णपिच्छिकालेपनादौ। पित्तशोथे दाहान्नभोजनादौ। वातशोथे त्रासनादौ च। मा.नि.। वि.र.।

**हेतुव्याधिविपरीतः**। त्रि। हेतुव्याध्युभयविपरीते (औषधादौ)। यथा—वातशोथे तन्नाशकदशमूलादौ। कफग्रहण्यां तन्नाशके तक्रादौ। स्निग्धतानाशक-रात्रिजागरणादौ च। मा.नि.। वि.र.।

**हेतुव्याधिविपर्य्यस्तार्थकारी (रिन्)**। त्रि। हेतुविपरीतार्थकारिणि, व्याधिविपरीतार्थकारिणि, हेतुव्याध्युभयविपरीतार्थकारिणि च औषधादौ। यथा—अग्निदाहे अगर्वादिलेपः। मदात्यये मद्यपानदानम्। मा.नि.। वि.र.।

**हेत्वन्तरम्**। क्ली। प्रकृतहेतौ वाच्ये विकारहेतुकथने। च.वि.८अ.।

**हेत्वर्थः**। पुं। "यदन्यदुक्तमन्यार्थसाधकं भवति। यथा—मृत्पिण्डोऽद्भिः प्रक्लिद्यते।" सु.उ.६५अ.।

**हेमम्**। क्ली। सुवर्णे। नन्दकत्वः। पुं। माषमितमाने। १ तोला। प.प्र.१ख.।

**हेम (न्)**। क्ली। सुवर्णे। रा.नि.व.१३। धुस्तूरे। अम.। धुस्तूरबीजे। च.द.ज.शो.चि.। मेद.। विद्याधररसे। नागकेशरे। रा.नि.व.६। च.सू.२अ.। रस.र.ज्वा.ज्व.चि.।

**हेमकान्दलः**। पुं। प्रवाले। हे.च.।

**हेमकाञ्चनः**। पुं। नागकेशरवृक्षे। वै.निघ.।

**हेमकान्तिः** । स्त्री । दारुहरिद्रायाम् । দারু-হরিদ্রা । वै.निघ. ।

**हेमकिञ्जल्कः** । पुं,क्ली । नागकेशरवृक्षे तत्पुष्पे च । रा.नि.व.६ ।

**हेमकृष्टिः** । स्त्री । स्वर्णाकर्षणयोगे । यथा— "रसदरदताप्यगन्धकमनःशिलाभिः क्रमेण वृद्धाभिः । पुटनसगुणं तारे विद्धुं हेमकृष्टिरियम् ।" रस.चि.१प. ।

**हेमकेतकी** । स्त्री । स्वर्णकेतकीवृक्षे । रा.नि.व.१० । See স্বর্ণকেতকী ।

**हेमगन्धिनी** । स्त्री । रेणुकनाम-गन्धद्रव्ये । রেণুক । र.मा. ।

**हेमगौरः** । पुं । किङ्किरातवृक्षे । रा.नि.व.१० ।

**हेमजीवन्ती** । स्त्री । पीतजीवन्त्याम् । স্বর্ণ-জীবন্তী । रा.नि.व.३ ।

**हेमतार(क)म्** । क्ली । तुत्थे । তুঁতিয়া । इं.च. ।

**हेमदुग्धः (कः)** । पुं । उदुम्बरवृक्षे । যজ্ঞ-ডুমুর । र.मा. । रा.नि.व.११ । मद.व.५ ।

**हेमदुग्धा** । स्त्री । स्वर्णक्षीर्याम् । সোণাক্ষীরাই, শেয়ালকাঁটা । जटा. । वा.सू.१५य.विरेचने । क्षीरोदुम्बरे । वै.निघ.२भ.वा.व्या.चि.विषमज्वरे ।

**हेमदुग्धी (न्)** । पुं । यज्ञडुमुरवृक्षे । श.र. । स्त्री । स्वर्णक्षीर्याम् । শেয়ালকাঁটা । रा.नि.व.५ ।

**हेमधान्यकः** । पुं । तिलवृक्षे । प.मु. ।

**हेमनिधिः** । पुं । पारदे । वै.निघ. ।

**हेमन्तः** । पुं । शीतकाले । अग्रहायण-पौषयोः । श.र. । तत्पर्य्यायाः,—ऊष्मागमः शरदन्तः हिमागमः हैमनं हैमनः हैमन्तं हैमलः । तद्गुणाः— "हेमन्तः शीतलः स्निग्धः स्वादुर्जठरवह्निकृत् ॥"

**हेमन्तनाथः** । पुं । कपित्थवृक्षे । श.च. ।

**हेमपत्रम्** । क्ली । धुस्तूरपत्रे । वै.निघ.२भ.दाह.चि.प्रलेपे । नागकेसरपुष्पे । च.द.दाह.चि. । "हेमपत्र कुटन्नटं ।" पद्मकाष्ठे । वै.निघ. । स्वर्णपत्रे ।

**हेमपत्रिका (त्री)** । स्त्री । स्वर्णपत्रिकायाम् । সোনামুখী ।

**हेमपद्मकम्** । क्ली । पद्मकाष्ठे । वै.निघ. ।

**हेमपादी** । स्त्री । हंसपादीलतायाम् । रक्तजम्बालुकायाम् । रा.नि.व.५ ।

**हेमपुष्पम्** । क्ली । अशोकपुष्पे । जवापुष्पे । मे. । स्वर्णचम्पके । वै.निघ. । आरग्वधपुष्पे । रा.नि.व.४ । र.मा. । नागकेसरपुष्पे । च.द.वा.व्या.चि.एलादितैले ।

**हेमपुष्पः** । पुं । चम्पकवृक्षे । अ.च. । प.मु. । अशोकवृक्षे । रा.नि.व.१० । उदुम्बरवृक्षे । যজ্ঞ-ডুমুর গাছ । प.मु. । महारग्वधवृक्षे । বড় সোণালু । रा.नि.व.९ । पीतजवावृक्षे । वै.निघ. ।

**हेमपुष्पकः** । पुं । चम्पकवृक्षे । अम. । चम्पकलोध्रवृक्षे । रा.नि.व.६ । नागकेसरवृक्षे । वै.निघ. ।

**हेमपुष्पिका (ष्पी)** । स्त्री । स्वर्णयूथिकायाम् । वै.निघ. । (ष्पी) मञ्जिष्ठायाम् । विश्वः । ভেলাকুচা । दुरालभायाम् । स्वर्णयूथिकायाम् । स्वर्णजीवन्त्याम् । स्वर्णालुवृक्षे । সোণালু । वै.निघ. । मुषल्यां । তালমূলী । रा.नि.व.७ । इन्द्रवारुण्याम् । রাখালশশা । रा.नि.व.३ ।

**हेमफला** । स्त्री । इन्द्रवारुण्यां । রাখালশশা । सुवर्णकदल्याम् । চাঁপাকলা । रा.नि.व.११ । स्वर्णाल्याम् । সোণালু । रा.नि.व.४ ।

**हेमवलम्** । क्ली । मौक्तिके । মুক্তা । रा.नि.व.१३ ।

**हेमवीजम्** । क्ली । धुस्तूरवीजे । वै.निघ.२भ.च.वा.चि.चानन्दरसे ।

**हेममांसी** । स्त्री । जटामांस्याम् ।

**हेममाक्षिकम्** । क्ली । स्वर्णमाक्षिके । वै.निघ. ।

**हेममित्रम्** । क्ली । स्फटिकारिकायाम् । ফটকিরি । प.मु. ।

**हेमयूथिका** । स्त्री । स्वर्णयूथिकायां । স্বর্ণযূঁই । रा.नि.व.१० ।

**हेमरागिणी** । स्त्री । हरिद्रायां । त्रिका. ।

**हेमलः** । पुं । मधुमिष्यावे । কুকুটমিন্ । प.मु. । क्रकलासे । मे. ।

**हेमलता** । स्त्री । स्वर्णजीवन्त्यां । रा.नि.व.३ । सोमलतायां । ब्राह्मीशाके । वै.निघ. ।

**हेमवती** । स्त्री । स्वर्णजीवन्त्यां । रा.नि.व.३ । वचायाम् । स्वर्णक्षीरिण्याम् । रा.नि.व.१३ ।

**हेमवर्णवती** । स्त्री । दारुहरिद्रायां । वै.निघ. ।

